# BENARES SANSKRIT SERIES;

A

## COLLECTION OF SANSKRIT WORKS

EDITED BY THE

PANDITS OF THE BENARES SANSKRIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*No. 51.*

# ( बृहत् ) वैयाकरणभूषणं

सर्वतन्त्रस्वतन्त्रश्रीमत्कौण्डभट्टविरचितम् ॥

# (BRIHAT) VAIYÂKARANA BHÛSHANA,

*A Treatise on Sanskrit Grammar,*

BY PANDIT KAUNDA BHATTA.

EDITED BY

PANDIT RÁMA KRISHNA SÁSTRÍ,

*Alias TÁTYÁ SÁSTRÍ PATAVARDHANA,*

PROFESSOR, GOVERNMENT SANSKRIT COLLEGE, BENARES.

*FASCICULUS 1.*

BENARES.

PUBLISHED BY THE PROPRIETORS Messrs. BRAJ B. DAS & Co.

AND SOLD BY H. D. GUPTA,

*SECRETARY, CHOWKHAMBA SANSKRIT BOOK DEPÔT.*

:o:

PRINTED AT THE RAJ RAJESHWARI PRESS & THE TARA PRINTING WORKS,

BENARES.

1899.

# BENARES SANSKṚIT SERIES;

A

COLLECTION OF SANSKṚIT WORKS

EDITED BY THE

PAṆḌITS OF THE BENARES SANSKṚIT COLLEGE,

UNDER THE SUPERINTENDENCE OF

R. T. H. GRIFFITH, M. A., C. I. E.

AND

G. THIBAUT, PH. D.

*Nos. 51, 52, 53 & 54.*

---

## ( बृहत् ) वैयाकरणभूषणं

पदार्थदीपिका च सहितम्

सर्वतन्त्रस्वतन्त्रश्रीमत्कौण्डभट्टविरचितम् ॥

## (BRIHAT) VAIYÂKARAṆA BHÛSHAṆA,

*A Treatise on Sanskṛit Grammar,*

BY PAṆḌIT KAUṆḌA BHAṬṬA:

ALSO PADĀRTHA DĪPIKĀ BY THE SAME AUTHOR.

EDITED BY

PAṆḌIT RÁMA KRISHṆA ŚÁSTRÍ,

*Alias TÁTYÁ ŚÁSTRÍ PAṬAVARDHANA,*

PROFESSOR, GOVERNMENT SANSKṚIT COLLEGE, BENARES.

---

BENARES.

*PUBLISHED BY THE PROPRIETORS Messrs. BRAJ B. DAS & Co.*

AND SOLD BY H. D. GUPTA,

*SECRETARY, CHOWKHAMBA SANSKṚIT BOOK DEPÔT.*

—:o:—

PRINTED AT THE RAJ RAJESHWARI PRESS & THE TARA PRINTING WORKS,

BENARES.

1900.

॥ श्रीः ॥

# भूमिका।

अथैतेषु दिवसेषु सत्स्वपि परमप्राचीनेषु भाष्यकैयटाद्याकरग्रन्थेष्वर्वाचीनेषु शब्देन्दुशेखरशब्दरत्नमनोरमादिषु विविधवादग्रन्थेष्वतिविस्तृतेष्वखिलवैयाकरणसिद्धान्तप्रतिपादकेषु तज्जिज्ञासूनां पुरुषायुषेणाप्यशेषतस्तज्ज्ञानासम्भवादनायासतस्तत्प्रतिपत्तये स्वापितृव्येण श्रीभट्टोजिदीक्षितेन विनिर्मितकारिकाया व्याख्यानमिषेण वैयाकरणभूषणं नाम निबन्धं निबबन्ध श्रीकोण्डभट्टाभिधमहासुधीः।

स चायं निबन्धो वैयाकरणप्राचीनमतसिद्धान्तानामुपपादकतया तार्किकमीमांसकादिबहुतरदुस्तर्काणां निरासकतया च विद्वज्जनानां महोपकारमापादयन्नपि केवलं पुस्तकालाभेन पठनपाठनादिव्यवहारागोचरीभूतोऽभूत्सांप्रतिकानामध्येतॄणामध्यापकानां च। ते चाद्यावधि केवलमल्पधियां सुबोधायैतद्ग्रन्थकृता निर्मितं वैयाकरणभूषणसारनामकमेतत्पुस्तकस्थितालपविषयविभूषितमेव व्यवहारविषयीभूतं व्यतन्वन्। तदेवं विद्यावतामनल्पमपकारमपाकुर्वता हरिदासेति यथार्थनामश्रेष्ठिसद्द्वितीयेन व्रजभूषणदासनाम्ना श्रेष्ठिवरेण वाराणसेयसंस्कृतसेरिजाख्यस्वीयपुस्तकावल्यामेतत्प्रचिकाशयिषुणा वारंवारं प्रोक्तचरपुस्तकमुद्रणाय समभ्यर्थितोऽहं शेषोपाख्यप्राचीनतरवैयाकरणमन्दिरान्महामहोपाध्यायभारद्वाजदामोदरशास्त्रिमित्रवरमन्दिराच्चानीतैतत्पुस्तकद्वयसहायेन परमपरिश्रमेण चैतत्संशोध्यामुद्रयम्।

परितुष्यन्तु च तदेनदतिप्राचीनवैयाकरणसिद्धान्तमतनिधानालभ्यलाभेन पठनपाठनादिप्रचारगोचरीकुर्वन्तोऽपिशुना मामकीनं सीसकाक्षरयोजनजनिञ्चाशुद्धिगणमगणयन्तोऽगण्यगुणगणमण्डिताः सर्वे पण्डिताः । प्रसीदतु चानेनादिप्रवर्तको व्याकरणादिविविधविद्याया भगवान् श्रीविश्वनाथोऽस्मानिति मुहुर्मुहुरभ्यर्थयते ।

मार्गे वदि ६ रवौ<br>संं० १९५६ } काशीस्थराजकीयसंस्कृतपाठशालाध्यापकः पटवर्धनोपनामको

रामकृष्णशास्त्री ।

॥ श्रीः ॥

# भूमिका।

सन्त्यनेके तर्कशास्त्रेषु चिन्तामणिगादाधरीमाथुरीजागदीशी-सिद्धान्तमुक्तावलीप्रभृतय उत्तमाधिकारिणां तर्कसंग्रहप्रभृतयो मन्दाधिकारिणामुपकाराय बहुतरास्तत्तत्तार्किकैर्निर्मिता निब-न्धास्तथापि मध्यमाधिकारिकल्पानामल्पधियामध्येतॄणां सुबोधाय विविधमतान्तरीयविषयविभूषितस्तर्कशास्त्रीयबहुविधपदार्थोपपा-दको न कोप्यद्यावधि कैश्चिन्निर्मितो निबन्ध इत्यालोच्य तथा-विधविद्यार्थिनामुपयोगाय श्रीकोण्डभट्टाविदुषा तर्कदीपिका नाम सुप्रबन्धो निबन्धोऽयं निरमायि। अयं च निबन्धकारो महा-महोपाध्यायभट्टोजिदीक्षितभ्रातुष्पुत्र इति "भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये" इत्येतत्कृतवैयाकरणभूषणस्थलेखतोऽवगत्या सुव्यक्त एव प्रसिद्धतरतत्कालनिर्णयेनैतत्काल-निर्णयोपि। एतत्पुस्तकमतीवालभ्यं केवलं काशीस्थराजकीय-संस्कृतपाठशालास्थपुस्तकागारात्पुरातनमेकमन्ते कीटादिभक्षि-तकतिपयाक्षरकमशुद्धमासाद्य श्रेष्ठिवरहरिदासमहोदयार्याऽनिवा-र्यप्रार्थनया परमपरिश्रमेण च परिशोध्य निस्सार्य च सुबहूनि स्खलितानि संयोज्य च सुविचारेण तत्रतत्रोपयुक्तान्यक्षरा-णि वाराणसेयसंस्कृतसेरिजाख्यपुस्तकावल्यां विद्यारसिकाना-

मुपकारायैककर्तृकन्त्वाद्वैयाकरणभूषणेन सहैव चैकस्मिन् पुटके संमुद्रये । संप्रार्थये च सर्वान्तःप्रेरकं परमेश्वरं विश्वनाथं सदा पठनपाठनादिप्रचारेण मामकीनं संशोधनादिकं मुद्रणायासं विद्वज्जनः सफलयतादिति ।

माघ वदि १३ सोमे<br>सं० १९५६

काशीस्थराजकीयसंस्कृतपाठशालाध्यापकः पटवर्धनोपनामको

रामकृष्णशास्त्री ।

॥ श्रीः ॥

# ॥ वैयाकरणभूषणम् ॥

श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ।
स्फोटरूपं यतः सर्वं जगदेतद्विवर्त्तते ॥ १ ॥
अशेषफलदातारं भवाब्धितरणे तरिम् ।
शेषाशेषार्थलाभार्थं प्रार्थये शेषभूषणम् ॥ २ ॥
वाग्देवी यस्य जिह्वाग्रे नरीनर्त्ति सदा मुदा ।
भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये ॥ ३ ॥
पाणिन्यादिमुनीन्प्रणम्य पितरं रङ्गोजिभट्टाभिधम्
द्वैतध्वान्तनिवारणादिफलिकां पुम्भाववाग्देवताम् ॥
दुर्ण्ढि गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्
सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषयेय ॥ ४ ॥
नत्वा गणेशपादाब्जं गुरूनथ सरस्वतीम् ।
श्रीकोण्डभट्टः कुर्वेहं वैयाकरणभूषणम् ॥ ५ ॥

प्रारिप्सितप्रतिबन्धकव्यूहोपशमनाय विरचितं श्रीपतञ्जलिस्मरणरूपं मङ्गलं शिष्यशिक्षार्थं निबध्नन् चिकीर्षितं प्रतिजानीते ॥

**फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः ।**
**तत्र निर्णीत एवार्थः संक्षेपेणेह कथ्यते ॥ १ ॥**

देवतान्तरं त्यक्त्वा फणिन एव स्मरणं तु तस्य प्रकृतशास्त्रनिर्मातृत्वेनाभ्यर्हितत्वेनेष्टतमत्वादित्याहुः । उद्धृत इत्यत्रास्माभि-

रिति शेषः । भाष्याब्धेः शब्दकौस्तुभ उद्धृत इत्युपादानं च त-
त्रत्यकथनस्याधुनिककल्पितत्वेन पाणिनीयानामश्रद्धेयत्वव्युदा-
साय । तस्याश्रद्धेयत्वे च तन्मूलकत्वादेतस्याप्यश्र[illegible]ं
स्यादिति भावः । तत्र निर्णीत इत्याद्युपादानं चे[illegible]धिक-
जिज्ञासुभिरस्मत्कृताच्छब्दकौस्तुभादवधेयमिति ध्वनयितुम् ॥

अत्रभवद्भिर्भाष्यकारादिभिः सप्रमाणमुपपादितान् श्री-
भर्तृहरिगुरुचरणप्रभृतिभिरतितरां विशदीकृतानपि वैयाकरणा-
भिमतपदार्थान् विकल्पग्रस्तचित्तत्वान्न सम्यगधिगन्तुमीशते दू-
षयन्ति चातस्तानेव निपुणतरमुपपादयन्नाह ॥

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।**
**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ २ ॥**

तत्रापि प्रायशो वाक्यस्य सुप्तिङन्तसमुदायत्वात् सुब-
न्तानां च प्रायः क्रियाविशेषणत्वाद्धातोश्च क्रियावाचकत्वेन
धुरस्फूर्तिकत्वादिच्छावशाद्वा प्रथमतो धात्वर्थनिरूपणमिति
बोध्यम् । धातुः स्मृत इत्यन्वयः । वाचकत्वेनेति शेषः ।
फलं विक्लित्त्यादि तत्तद्रूपेण वाच्यम् । तद्वाचकतापि तत्त-
द्रूपेण । फलविशिष्टव्यापारे एकशक्तौ चैकदेशत्वात्फलस्य
तत्र पदार्थान्तरान्वयो न स्यादित्यादि वक्ष्यते । फलव्यापा-
रयोः साध्यसाधनभावस्तु संसर्गः । अतो जनकत्वांशे शक्तिं
विनापि फलजनकत्वं व्यापारे सुलभम् । एकपदोपस्थाप्य-
योरपि कृतीष्टसाधनत्वयोः कृतिवर्त्तमानत्वयोर्वा यथा परेषाम-
न्वयस्तथास्माकमपीति न कश्चिद्दोषः । अथ कोयं व्यापारः । न
तावत्फलप्रयोजकक्रिया । आत्माश्रयात् । क्रियात्वस्यैव
तत्त्वात् । दण्डादिव्यापारस्यापि धात्वर्थत्वापत्तेश्च । न चे-

ष्टापत्तिः । धातूपात्तव्यापाराश्रयत्वेन दण्डादेः कर्तृत्वापत्तेः । तथा च दण्डेन देवदत्तः पचतीत्यादौ प्रथमापत्तेः । न चेयमनभिहिते करणे एव तृतीयेति वाच्यम् । दण्डादेः कर्तृत्वे करणत्वस्यैवासम्भवात् । आकडारादेकासंज्ञेति नियमनात् । अन्यथा दण्डेन दण्डः करोतीत्यपि स्यात् । न चा"त्मानमात्मना वेत्सि सृजस्यात्मानमात्मना । आत्मानमात्मना हंसी"-त्यादिवदिष्टापत्तिः । औपाधिकभेदमादायैवात्र कर्तृत्वकर्मत्वाद्युपपादनस्य कर्मवत्कर्मणातुल्यक्रिय इति सूत्रे भाष्ये कृतत्वात् । न चागत्या निरवकाशा करणसंज्ञा कर्तृसंज्ञां बाधिष्यतइति वाच्यम् । गतेर्वक्ष्यमाणत्वात् । नापि यदनन्तरमव्यवधानेन फलोत्पादः सा क्रिया । यथौदनं पचतीत्यत्र विक्लेदनम् । अधिश्रयणादीनां तज्जनकतया क्रियात्वमौपचारिकम् । उक्तं च । अनन्तरं फलं यस्याः कल्पते तां क्रियां विदुः । प्रधानभूतां तादर्थ्यादन्यासां तु तदाख्ययेति वाच्यम् । सम्भवति मुख्यत्वे गौणताया अन्याय्यत्वात्, काष्ठादिक्रियाया अप्यव्यवहितपूर्ववर्तित्वेनोक्तदोषाच्च । आरब्धेपि पाके क्रियाया भावित्वात्पक्ष्यतीति प्रयोगापत्तेश्च । अथ पचतीत्यनुगतव्यवहारादस्ति पचित्वं जातिः सैव क्रिया । न च क्रियायाः साध्यत्वं न स्यात् । नास्त्येव । किं तु तदाश्रयाणामेव साध्यत्वम् । उक्तं च । जातिमन्ये क्रियामाहुरनेकव्यक्तिवर्त्तिनीम् । असाध्या व्यक्तिरूपेण सा साध्येवोपलक्ष्यतइति चेन्न । दण्डादिव्यापारस्यापि फलानुकूलत्वेनोक्तदोषात् । तत्र जातिर्नास्तीति चे, त्तर्हि दण्डः पचतीत्यपि न स्यात् । एतेन चरमव्यापारवर्तिनी जातिः क्रियेति निरस्तम् । तस्मात् तद्वार्तिरूपमेव क्रियात्वमिति चेन्न । भावनाभिधः साध्यत्वेना-

भिधीयमानो व्यापारविशेषः क्रिया । उक्तं च वाक्यपदीये । यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात्सा क्रियेत्यभिधीयते इति । वक्ष्यति ग्रन्थकारोपि । व्यापारो भावना सैवोत्पादना सैव च क्रियेति । न च साध्यत्वेनाभिधाने मानाभावः । पचति पाकः करोति कृतिरित्यादौ धात्वर्थावगमाविशेषेपि क्रियान्तराकाङ्क्षानाकाङ्क्षयोर्दर्शनस्यैव मानत्वात् । तथा च क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकं रूपं साध्यत्वन्तदेवासत्त्वभूतत्वम्भावनायाः प्रत्ययार्थतावादेपि पचति पाकभावनेत्यादौ तथादर्शनेनास्यास्तथात्वावश्यकत्वात् । अत एव वक्ष्यति ' साध्यत्वेन क्रियातत्र 'त्यादि । व्युत्पादयिष्यते चैतदुपरिष्टात् । स च व्यापार आत्मनिष्ठः प्रयत्नः शरीरादीनां च फूत्कारादिः, तद्वत्येव पचतीति व्यवहारात् । अथैवमपि सर्वैतत्साधारणधर्मस्याभावाच्छक्यतावच्छेदकाभावे कथं स शक्यः । न च तत्त्वमेवावच्छेदकम् । नानार्थत्वापत्तेः नानाशक्त्यापत्तेश्च । ननु शक्यतावच्छेदकतयैवानुगतस्य तस्य सिद्धिः । यथा कारणतावच्छेदकत्वादिना, अत एव जलशब्दशक्यतावच्छेदकतया जलत्वसिद्धिरिति लीलावत्युपाये उक्तम् । द्रव्यानुगतबुद्ध्या द्रव्यत्वस्य गुणपदशक्यतावच्छेदकतया गुणत्वस्य च सिद्धिरित्यपरे । तच्च जातिरुपाधिर्वेत्यन्यदेतदिति चेन्न । येन रूपेण बोधस्तस्यैव शक्यतावच्छेदकत्वात् । कल्प्यमानधर्मपुरस्कारेण च न शाब्दबोधः । न च कारणतावच्छेदकत्वादिनापि जातिर्न सिध्येत् । येन रूपेण कारणताबोधस्तस्यैव कारणतावच्छेदकत्वौचित्यादिति वाच्यम् । कल्प्यमानलघुरूपेण कारणत्वे सम्भवति गुरुरूपेण तदस्वीकारेण तत्र क्षत्यभावात् । अत्र च सिद्धरूपेण बोधस्या-

नुभवसिद्धत्वात्तथाकार्यकारणभावावश्यकत्वे कल्प्यमानधर्मेणापि कार्यकारणभावान्तरकल्पने गौरवमिति न तत्कल्पनं युक्तम् । अन्यथा सैन्धवादिपदवाच्यतावच्छेदकत्वेनाप्यश्वादिवृत्तिधर्मान्तरकल्पनापत्तेः । अश्वत्वादिनैव प्रतीतेस्तत्कल्पना न युज्यतइति चेत्, समैवात्रापि फूत्कारत्वयत्नत्वादिनैव प्रतीतिरिति दिक् । इदं च तार्किकरीतिमनुरुध्य । वस्तुतः कारणतावच्छेदकत्वादिनापि न जातिसिद्धिरिति व्यापारो भावनेति कारिकायां वक्ष्यते इति कथमेतदिति चेन्न । तत्तद्रूपेणैव तस्य शक्यत्वात् । अत एव पचतीत्यादौ फूत्कारत्वाधःसन्तापनत्वयत्नत्वादिभिर्बोधः सर्वसिद्धः सङ्गच्छते । न च नानार्थता । बुद्धिस्थत्वादेः शक्यतावच्छेदकानां तदादाविवानुगमकस्य सत्त्वात् । उक्तं च हरिणा । गुणभूतैरवयवैः समूहः क्रमजन्मनाम् । बुद्ध्या प्रकल्पिताऽभेदः क्रियेति व्यपदिश्यते, इति । क्रमजन्मनामेषां व्यापाराणां समूह एकत्वबुद्ध्या संकलनात्मिकया प्रकल्पितो ऽभेदो यस्य स च समूहः स्वभावतो गुणभूतैरवयवैर्युक्त इत्यर्थः । एवं च सर्वेषां कारकाणां व्यापारा वाच्याः । यो यदा यस्य बुद्धिस्थस्तदा सोभिधीयते तदैव तदाश्रयः कर्त्ता । अत एव काष्ठं पचति स्थाली पचतीति सङ्गच्छते । एवं च काष्ठेन पचतीत्यपि नानुपपन्नम् । तदा तद्व्यापारस्य धात्वर्थत्वाविवक्षणात् । एतेन काष्ठक्रियाया वाच्यत्वे तृतीया न स्यात् । अवाच्यत्वे प्रथमा न स्यादित्यादिकमपास्तमिति न कश्चिद्दोष इति ध्येयम् । एतस्य धातुवाच्यत्वे मानं तु वक्ष्यते । अयं प्रत्ययवाच्य एवेति मीमांसकाः । अयं न वाच्यः किं त्वेतद्विशेषः कृतिरिति नैयायिकाः । तत्रापि वक्ष्यते । आख्यातस्य न कर्त्ता वा-

च्यः । कृतिमतो व्यापारवतो वा कर्तृत्वेन तच्छक्तात्वनन्त-कृत्यादौ शक्यतावच्छेदकत्वे गौरवादिति नैयायिकाद्युक्तं दू-षणमस्मन्मताज्ञानादिति ध्वनयन्नेव स्वमतमाह । आश्रये त्वि-ति । आश्रये, फलाश्रये व्यापाराश्रये च । फलव्यापारयोर्धा-तुलभ्यत्वादाश्रयमात्रमर्थः । अनन्यलभ्यस्य शब्दार्थत्वात् । तथा चाश्रयत्वमेव शक्यतावच्छेदकमतो नोक्तदोषावकाश इति भावः । अत एव कृतिविशिष्टकर्तृवाचितृचः कृतिवाचककृ-धातुयोगे कर्त्रेत्यत्राश्रयपरत्वमिति नैयायिकाः । एवं कृत्प्र-त्ययस्थले भावनांशस्याक्षेपलभ्यत्वादाश्रयमात्रमर्थ इति मीमांस-का मन्यन्ते । अथाश्रय आख्यातार्थ इत्यत्र मानाभावः । त-त्प्रतीतिश्चाक्षेपाल्लक्षणया वोपपद्यते । प्रथमान्तपदेन तदुप-स्थितिसत्वाद्देवदत्तः पाकानुकूलकृतिमान् एकदेवदत्ताश्रयको वर्त्तमानो व्यापार इति बोधोपपत्तावन्यलभ्यत्वेन शक्तिकल्प-नाऽयोगाच्चेति चेत् । अत्र वदन्ति । कर्त्रादेरवाच्यत्वे युष्मदि समानाधिकरणे मध्यम इति पुरुषव्यवस्था न स्यात् । कर्त्तुरवाच्यत्वेन सामानाधिकरण्याभावात् । देवदत्तः पच-तीत्यादौ कर्त्तरि तृतीया पच्यते तण्डुल इत्यादौ द्वितीया च स्यात् । कर्त्राद्यनभिधानेन तयोर्दुर्वारत्वात् । ननु तन्निष्ठ-संख्याभिधानात्तदाभिधानम्, एवं युष्मदस्तिङुपात्तसंख्यान्वयि-वाचकत्वं सामानाधिकरण्यमपीति चेन्न । तिङ्वाच्यसंख्या-याः कुत्रान्वय इत्यनिश्चयात् । तथा च कर्तृप्रत्ययेपि संख्या-या उभयत्रान्वये उभयोरप्यभिधेयत्वं स्यात् । न च कर्त्रैक-त्वेनैव संख्याभिधीयतइति शङ्क्यम् । तथा शक्तेरबोधना-त् । विशेषणतया कर्त्तुर्वाच्यत्वासिद्धेश्च शक्यतावच्छेदकेपि गौरवाच्चेति । किं च कृत्तद्धितसमासैः संख्यानभिधानात्तत्रैव क-

र्तुरनभिधाने देवदत्तः पाचकः इत्यादौ तृतीयाद्यापत्तेः । वस्तुतस्तिङ्स्थले कर्त्तुरवाच्यत्वे पचमान इत्यादौ कृत्यपि तन्न स्यात् । युक्तेस्तुल्यत्वात् । लकारस्य वाचकस्योभयत्रैकत्वात् । आदेशानां वाचकत्वे हरेऽव विष्णोऽव राममित्यादौ सर्वे सर्वपदादेशा इति न्यायेन वाक्यपदस्फोटयोः सिद्ध्यापत्तेः, अपसिद्धान्ताच्च । न च कृति कर्त्तुरवाच्यत्वे इष्टापत्तिः । समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिभङ्गापत्तेः । जञ्जभ्यमानाधिकरणोच्छेदप्रसङ्गाच्च । शानचा कर्त्तुरुक्तत्वाच्छक्त्या पुरुषार्थत्वमिति सिद्धान्तस्यैव सम्भवात् । तस्मादवश्यं कर्तृकर्मणोर्वाच्यत्वमुपेयमिति । अत्र नैयायिकाः, कर्तृसंख्याभिधानादेव तदभिधानं वाच्यम् । न च तदन्वयनियमे मानाभावः । भावनान्वयिन्येव तदन्वयात् । संख्याभावनयोः समानपदोपात्तत्वेनैकान्वयित्वस्यौचितत्वात् । भावनायाश्चेतराविशेषणीभूतप्रथमान्तपदोपस्थाप्यएवान्वयः । तथैवाकाङ्क्षितत्वात् । एवं कृदादावपि कर्त्राद्यभिधानादेवाभिधानव्यवस्था, अन्यतरानभिधाने तृतीयेति सूत्रार्थः । तस्मान्नोक्तानुपपत्तिः । कृत्प्रत्ययस्थले च कर्तुरवाच्यत्वे अभिधानव्यवस्थानापत्तेः । न च कृत्यभिधानादभिधानम् । कर्मप्रत्ययस्थलेऽप्यापत्तेः मितापक्कीगतं पुरमिति लिङ्गविशेषेण सामानाधिकरण्यानापत्तेर्वा तत्र वाच्यतास्वीकारः समानाधिकरणस्यैव विशेषणस्य समानलिङ्गत्वात् । अन्यथा राज्ञः स्त्री इत्यादावपि प्रसङ्गात् । एवमाख्यातार्थस्य प्रथमान्तार्थे एवान्वयव्युत्पत्तेः । पक्ता तृप्यतीत्यत्र पाकानुकूला कृतिस्तृप्यतीति बोधः स्यात्तथा चानन्वयः । अतः कृति कर्त्तावश्यं वाच्यः । लकारस्यैकस्य वाचकत्वेऽपि शानजादौ कर्त्तरि लक्षणा न शक्तिः, येनानेकार्थता

स्यात् । तृजादेः परं शक्तिरिति न दोषः । आदेशानां वाचकत्वेपि न दोषः । हरेवेत्यादौ च प्रत्येकं पदानामत्यून्नशक्तिकानां तत्तदर्थोपस्थापनद्वारा वाक्यार्थबोधकत्वसम्भवान्न वाक्यस्फोटादिः । अत्र त्वनुपपत्त्या कर्तर्येव शक्तिरित्याहुः । भावनान्वयिनि संख्यान्वय इत्यसङ्गतम् । न पचतीत्यत्र भावनानन्वयिन्येव कर्त्तरि तदन्वयेन व्यभिचारात् । संख्यायाः प्रत्ययार्थत्वाद्भावनायाश्च धात्वर्थत्वस्य वक्ष्यमाणत्वात्समानपदोपात्तत्वस्याभावाच्च । विशेष्यतयाख्यातजन्यसंख्याबोधं प्रति तेनैव सम्बन्धेन भावनाप्रकारकबोधसामग्रीत्वेन हेतुत्वपर्यवसानेन गौरवाच्च । समानपदोपस्थितान्वयित्वमपेक्ष्य समानपदोपात्तत्वस्यैव लाघवेन संख्यान्वयनियामकत्वौचित्याच्च । भावनान्वयनियामकस्यैव तद्धेतोरिति न्यायेन संख्यान्वयनियामकत्वौचित्याच्च । भावनान्वयिनि संख्यान्वय इतिवत्संख्यान्वयिन्येव भावनान्वय इत्यस्यापि सुवचत्वाच्च । तस्मात् प्रथमान्तपदोपस्थाप्यएव संख्यान्वयः, प्रथमान्तपदोपस्थाप्यत्वमेव नियामकम् । किञ्चैवं सति विशेष्यतासम्बन्धेनाख्यातार्थसंख्याप्रकारकबोधं प्रति इतराविशेषणप्रथमान्तपदजन्योपस्थितिविषयतया कारणमिति लघुभूतः कार्यकारणभावः फलितः । 'नारायण इव नरो हन्ति' 'चन्द्र इव मुखं दृश्यते' इत्यत्र नारायणे चन्द्रे च संख्यान्वयवारणायेतराविशेषणेति । चैत्रेण सुप्यतइत्यत्र चैत्रनिष्ठस्वाप इति बोधाद्विशेष्ये स्वापे तद्वारणाय प्रथमान्तेति । वस्तुतस्तु तवापि कुत्र कर्त्ता वाच्यः, कुत्र कर्मेत्यत्र नियामकाभावाच्छबादिकं द्योतकं वाच्यम्, तथा च ममापि कुत्र संख्यान्वय इत्यत्रापि तदेव द्योतकमिति न काप्यनुपपत्तिः । एवं कृदादिसाधारण्याय मुख्य-

भाक्तसाधारणकृत्यनभिधानात्कर्तुरनभिधानमिति व्यवस्था आश्रयणीया। कर्मप्रत्यये च फलमेवार्थः कृतेस्तृतीयया लाभात्। एवं च फलानभिधानमेव कर्मानभिधानम्। यद्यप्येवं कृत्प्रत्यये प्रागुक्तरीत्या ऽनभिधानव्यवस्था कर्तृवाच्यत्वसाधिका न भवति। तथापि देवदत्तः पाचक इत्यादिसामानाधिकरण्यानुपपत्त्याद्येव तत्साधकं द्रष्टव्यम्। शेषं प्राग्वदेवेति पुनस्तन्नवीनाः॥

अत्रोच्यते॥ विशेष्यतासम्बन्धेनाख्यातार्थसंख्याप्रकारकबोधं प्रत्याख्यातजन्याश्रयोपस्थितेर्हेतुत्वं लाघवादिति कर्तृकर्मणोस्तिङ्वाच्यत्वमावश्यकम्। न तु त्वदुक्तरीत्या प्रथमान्तपदजन्यज्ञानं तथा। एतादृशाकांक्षायाः पदद्वयघटितत्वेन गुरुत्वात्। इतराविशेषणत्वघटितत्वेन सुतरां गौरवाच्च। न चाख्यातस्य भावनामात्रवाचकत्वग्रहवतस्तादृशबोधानुरोधेनोक्तकार्यकारणभावस्तवाप्यावश्यक इति वाच्यम्। एवं हि यत्नस्य धातुवाच्यत्वग्रहवतः पाकानुकूलवृत्तिमानिति बोधानुरोधेन धात्वर्थप्रकारकशाब्दबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुरित्यस्यावश्यकत्वेन रथो गच्छति जानाति करोतीत्यादौ धात्वर्थस्य साक्षाद्रथादौ भानसंभवेनाख्यातस्याश्रयत्वलक्षणाभ्युपगमानापत्तेः। रथेन ग्रामो गम्यते इत्यादौ धात्वर्थफलस्यैव साक्षात्कर्मणि भानसंभवात्कर्माख्यातानां फलवाचकत्वाभ्युपगमवैयर्थ्यापत्तेश्च। विवेचयिष्यते चैतदुपरिष्टात्। न च तत्तद्व्युत्पत्तिग्रहशालिपुरुषशाब्दबोधानुरोधेनोदाहृतकार्यकारणभावद्वयमप्यावश्यकं परं तु आख्यातस्य कर्त्तरि शक्तावनन्तवृत्त्यादावच्छेदकत्वापत्तावतिगौरवं परमतिरिच्यतइति वाच्यम्। भावनाश्रयत्वस्यैवाखण्डशक्तिरूपस्यावच्छेदकतायाः प्रागुक्तत्वे-

नैतद्गौरवस्य स्ववासनामात्रकल्पितत्वादिति । अपि चैवं कृता-मपि कर्तृवाचकत्वं न स्यात् । गौरवस्य साम्यात् । अथ चैत्रो गन्तेत्यत्राभेदान्वयादवश्यं कर्त्ता वाच्यस्तत्राभ्युपगन्तव्यः । न च चैत्रो गच्छतीतिवद्गन्तेत्यत्राप्याश्रयतया कृतेश्चैत्रान्वयाद्वे-त्वासिद्धिः । समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेः । भेदान्वयबोधे एकपदोत्तरविभक्तिविरुद्धविभक्तिमत्पदजन्योप-स्थितेर्हेतुत्वाच्च । चैत्रो गन्तेतिवच्चैत्रे गन्तेत्यापत्तेश्चेति चेत्, अत्रोच्यते । घटो न राज्ञः सूतस्य धनं पचातितरां चैत्रः पच-तिकल्पं मैत्र इत्यादावभेदबोधाद्भेदेन बोधदर्शनाच्चोक्तकार्यका-रणभावद्वयस्यापि व्यभिचारः । न चात्रायोग्यत्वान्नान्वयः । कृत्यापि तथा सुवचत्वात् । एवं पचतिकल्पं मैत्र इत्यादावपि नामा-र्थत्वेप्याश्रयाश्रयिभावेनान्वयः संभवत्येव । न चात्राख्यातस्य कर्तरि लक्षणा । एवं हि पक्ता गच्छतीतिवत्पचतिकल्पं गच्छ-तीत्यापत्तेः । किं चात्रैव नामाख्यातार्थयोरभेदान्वयस्य क्लृप्त-त्वात्तदनुरोधाच्चैत्रः पचतीत्यत्राभेदानुभवाच्चाख्यातस्य कर्तृवाच-कत्वापत्तौ सिद्धं नः समीहितम् । न च कल्पबादेरेव कर्तरि ल-क्षणा, तथासत्याचार्यकल्पावाचार्यकल्पा इतिवद् द्विवचनादेरपि कर्तृत्वादिविवक्षायामापत्तेः । न च सुब्विरुद्धतिङन्तोपस्थाप्यत्वे-न कृतेर्भेदेनैवान्वय इति वाच्यम् । स्तोकं पचतीत्यादौ स्तोक-पाकयोरभेदबोधानापत्तेः । तस्माद्भेदेन नामार्थप्रकारकबोधे सार्थ-कसुबन्तिपातजन्यैवोपस्थितिर्हेतुरिति हेतुहेतुमद्भावादाख्यातार्थे-नाभेदबोधो दुर्वार इति वक्ष्यामः । यत्तु चैत्रे गन्तेति स्यादिति । तन्न । चैत्रे गच्छतीत्यस्याप्यापत्तेः । यदि चाख्यातार्थस्य प्र-थमान्तोपस्थाप्यएवान्वयस्तदात्रापि कृदर्थप्रकारकशाब्दबोधं प्रति समानाधिकरणपदजन्योपस्थितिर्विषयतया हेतुरिति कार्य-

कारणभावोऽस्तु । कार्यकारणभावान्तरकल्पनागौरवं चाख्याता-
र्थभावनान्वयाय प्रथमान्तपदजन्योपस्थितिहेतुत्वकल्पने ऽपि तु-
ल्यम् । कृदर्थवदभेदबोधे वक्ष्यमाणसिद्धकार्यकारणभावेन नि-
र्वाहोपपत्तेरिति दिक् । पक्तेत्यादौ तृजर्थकृतेर्न नामार्थत्वमपि,
तृजन्तस्यैव नामत्वात् । पाकाद्यनुकूला कृतिरेव हि नामार्थः
न तु शुद्धा । तथा च नामार्थस्य विशेष्ये विशेषणमितिन्यायेनैव
चैत्रादावन्वय इत्यपि कश्चित् । अथैवमपि मित्रापक्षीति लिङ्गेन
सामानाधिकरण्यात्तत्र कर्त्ता वाच्य इति चेन्न । तस्य साधुत्वा-
र्थमप्युपपत्तेर्वस्त्वव्यवस्थापकत्वात् । एतादृशानां विशेष्यनिघ्न-
त्वस्य सर्वसिद्धत्वात् । अन्यथा शुक्लादिपदानां द्रव्येपि श-
क्त्यापत्तेः । रूपमात्रे शक्तौ शक्यतावच्छेदकलाघवस्य नीलं
रूपमित्यादौ केवलरूपे प्रयोगस्य च पक्ता जातः पाठको जात
इत्यादौ कर्ता केवलकृतौ शक्तिसाधकेनाविशेषात् । अत एव
सामानाधिकरण्यं नैकविभक्तिनिर्देश्यत्वमर्थसाधकम् । प्र-
योगस्य वस्त्वव्यवस्थापकत्वादिति द्वित्वप्रत्यक्षविचारे गु-
णोपाये ऽप्युक्तम् । किं चैवं समानाधिकरणस्य विशे-
षणस्य विशेष्यसमानलिङ्गत्वनियमवत्तादृशस्यैव विशेषणस्य
विशेष्यसमानवचनत्वनियमादाख्यातस्यापि कर्तृकर्मवाचकता दु-
र्वारा । अन्यथा देवदत्ताः पचतीत्यादेरप्यापत्तेः । न च चैत्रो
मैत्रश्च गच्छतः सुन्दरावित्यादौ व्यभिचारान्नायं नियमः ।
क्षुदुपहन्तुं शक्यं शैत्यं हि यत्सा प्रकृतिर्जलस्येत्यादौ तस्यापि
तुल्यत्वात् । भोक्ता तृप्यतीत्यादौ च कृतः कृतिमात्रवाचकत्वेपि
नानुपपत्तिः । न पचति चैत्र इत्यत्र प्रतियोगितासम्बन्धेन न-
ञर्थइव सामानाधिकरण्यसम्बन्धेन कृदर्थकृतावप्याख्यातार्थकृ-
त्यन्वयसम्भवात् । न चाधारतया तिङर्थकृतिबोधे प्रथमान्तप-

दजन्योपस्थितेर्हेतुत्वं सुवचम् । न पचति चैत्र इत्यादावनन्वयापत्तेः । अस्तु वा तत्र कृतः कर्त्तरि लक्षणा । अतो नानुपपत्तिः । न च केवलकृतौ प्रयोगात्तत्र शक्तिनिर्णये सत्येव तद्वति लक्षणा युज्यतइति वाच्यम् । पक्ता जात इत्यादौ परेषां पचतीत्येवोक्ते केवलकृतिबोधवत्केवलं पक्तेत्येवोक्ते च केवलकृतौ प्रयोगात् । अन्यथा ऽऽख्यातस्यापि कर्तृवाचकतापत्तेः । वस्तुतस्तु पश्य मृगो धावति, पश्य नृत्यति भवति, पचति भवतीत्यादौ धावनादिभावनाया दर्शनादौ विशेषणतया ऽन्वयबोधानुरोधाद्वक्तुरपि तथैव तात्पर्याद्भाष्यकारैरपि तथैवाभ्युपगमेनैतादृशैकवाक्यताप्रतिपादनाच्च नाख्यातार्थभावनाप्रकारकबोधं प्रति प्रथमान्तपदजन्योपस्थितेः कारणत्वं व्यभिचारात् । चैत्रः पचतीत्यत्र नैयायिकानां तथान्वयबोधस्तु तादृशव्युत्पत्त्यनुरोधात् । अत एव मीमांसकादयश्चैत्रनिष्ठा भावनेति भावनाविशेष्यकमेव बोधमाहुः । तस्मान्न तथा कार्यकारणभावमूलिका कृतौ कर्त्तरि शक्तिर्युक्ता, किं तु चैत्रः पाचक इत्यभेदान्वयानुरोधात्स चाख्यातेपि सम इति स्यादेव तत्रापि कर्त्रादिवाचकत्वमिति विभावयामः ॥

केचित्तु कर्तुरवाच्यत्वे पचतीत्यत्र एककर्तुर्मानस एकत्वसंशयः स्यात् । ननु कर्तुरनुपस्थितौ धर्मिज्ञानाद्यभावात्कथं संशयः । लक्षणया तदुपस्थितौ चैकत्वविशिष्टे लक्षणाभ्युपगमान्न संशय इति चेन्न । मनसा तदुपस्थितिसम्भवात् । न चोपस्थितत्वात्संख्यान्वयोपि स्यादिति कथं संशय इति वाच्यम् । शब्दोपस्थितस्यैव नैयायिकैः शाब्दे ऽन्वयाङ्गीकारात् । न च लक्षणयोपस्थितेः संख्यान्वयस्य सुवचत्वान्न संशय इति वाच्यम् । न्यायनये सर्वत्र लक्षणायां बीजाभावात् । प्रथमान्तपदादनु-

पस्थितेस्तदन्वयासम्भवाच्चेति वदन्ति । अधिकं वक्ष्यमाणरीत्यावधेयमिति दिक् ॥

मीमांसकास्त्वनभिहितइत्यस्याबोधिते इत्यर्थः । बोधश्च शक्त्या आक्षेपाद्वा । स चाख्याते आक्षेपात्। कृति तु शक्त्या। अत एव कर्त्रधिकरणे भट्टैरुक्तम्। "यादृशस्तु गुणभूतः कर्त्तात्रावगम्यते न तादृशेन विना भावनोपपद्यत इति अर्थापत्त्यानुमानेन वा शक्ताऽनुगमयितु" मित्यादिना। ननु कृति आक्षेपात् आख्याते शक्त्येति वैपरीत्यं किं न स्यात् इति चेन्न । प्रधानीभूतया भावनया कर्त्तुराक्षेपस्य युक्तत्वात् । भावनाया आक्षेपलभ्यत्वे च प्राधान्यानुपपत्तेः। एवं कृत्यपि प्राधान्यात् कर्त्तुर्वाच्यत्वमावश्यकमिति युक्तस्तेनाक्षेपः । उक्तं च । यदि कर्त्रा धात्वर्थेन वा भावनावगम्येत ततः पाचकपाठकादिपदेष्विव तिरोहितस्वरूपा ऽवगम्येत। प्राधान्यात्तु शब्दार्थत्वाध्यवसानमिति। पदादनुपस्थितस्य कर्त्तुः कथं शाब्दबोधविषयत्वमिति चेत् । अत्र नामार्थनिर्णये वक्ष्यते। तस्मान्नाख्यातस्थले कर्तृकर्मणी वाच्ये । अभिधानव्यवस्थायाः प्रकारान्तरेणोपपत्तेरिति वदन्ति ॥

अत्रोच्यते। यथाकथञ्चिद्भावनाक्षेपमात्रेण प्रत्यायितत्वमभिधानव्यवस्थायां नोपपादकम् । कर्मप्रत्ययेपि भावनाया विना आश्रयमनुपपत्तेः। कर्त्तुराक्षेपात्कर्त्रभिधाने तृतीयानापत्तेः। आख्याते शक्त्या कृत्याक्षेपादिति वैपरीत्यस्य दुर्वारत्वाच्च । यत्तु तथा सति प्राधान्येन भानं न स्यादिति । तन्न। आक्षेपलभ्यस्यापि प्राधान्येन भाने बाधकाभावात् । अन्यथा प्राधान्यानुरोधाद्व्यक्तेर्वाच्यत्वस्वीकारापत्तावाकृत्यधिकरणं दत्तजलाञ्जलि स्यादिति । ननु कर्त्रा स्वस्वरूपानिरूपकत्वेन भावनाया आक्षेपाद् गुणत्वम् । जात्या तु लोके परिच्छेद्यतयावगतं द्रव्यं

तथैनाक्षिप्यतइति न गुणत्वमिति चेन्न । एतादृशविशेषस्याप्रयोजकत्वेन गुणत्वादावनियामकत्वात् । भवद्रीत्या व्यक्तेरिव कर्तुः परिच्छेद्यत्वादाक्षिप्तस्यापि व्यक्तिवद्विशेष्यत्वापत्तेश्च । किं च देवदत्तादिः शक्तिविशेषरूपो वा कर्त्ता न भावनानिरूप्यः । घटत्ववदखण्डत्वात् । कर्तृत्वं तद्घटितमिति चेत् । घटत्वमपि घटघटितमेवेति विशेषोपपादनन्दन्भ्रणम् । अथ घट इत्यत्रापि नास्त्येव घटादेर्विशेष्यत्वप्रतीतिः किं तु घटत्वादेरिति चेत् । सत्यम् । एवं हि व्यक्तौ पदार्थान्तरान्वयो न स्यात् । विशेष्यतयानुपस्थितत्वेनाकांक्षाविरहात् । किं च न भवत्प्रतीत्यैव वस्तुसिध्यसिद्धी किं तु सकलसाधारणया । तादृशी च न व्यापारेपि, नैयायिकैः कर्तृविशेष्यकबोधाभ्युपगमात् । एवं घटपदादिस्थलेपि । तस्माद्विशेष्यत्वादिबोधो भवतामेव तादृशव्युत्पत्तिवशाज्जायमानो न वस्तुव्यवस्थापक इति स्फुटतरं भावार्थाधिकरणदूषणे वक्ष्यते । अथ भावनया कर्तुराक्षेपो युक्तः न तु कर्त्रा भावनायाः कर्मप्रत्ययस्थले भावनाप्रत्ययानुपपत्तेरिति चेन्मैवम् । कर्तृकर्मोभाभ्यामाक्षेपसम्भवात् । न चोभयोराक्षेपकत्वकल्पने गौरवं, तत्राप्युभयोराक्षेप्यत्वकल्पने गौरवात् । कर्मकर्तृकृत्सु तदाक्षेपाय त्वयाप्येवं स्वीकर्त्तव्यत्वाच्चेति । यत्तु कर्त्तरिकृदिति व्याकरणस्य कृत्प्रत्ययस्थले कर्त्तरि शक्तिपरिच्छेदकस्य सत्वात्कर्तृवाच्यत्वावश्यकत्वात्तेन कृत्प्रत्ययस्थले भावनाक्षेपो युक्तः । तिङ्स्थले च तदभावान्न कर्तुर्वाच्यत्वमायातीति । तदापाततः । तिङ्स्थलेपि लः कर्मणीति सूत्रस्य कर्त्तरि शक्तिपरिच्छेदकस्य सत्त्वात् । कर्त्तरिकृदिति कर्तृग्रहणस्यैवात्रानुवृत्तेः । अनन्यलभ्यत्वादेश्चोभयत्रापि तुल्यत्वात् । अथ लः कर्म्मणिचभावेचाकर्मकेभ्यः, तिप्तस्झि, द्व्येकयोर्द्विव-

चनैकवचने इत्येतेषामेकवाक्यतया विधानेन कर्तुरेकत्वेभिधेये लकारैकवचनं तिबादि प्रयोक्तव्यमित्यर्थपर्यवसानात्कर्तुर्वाच्यत्वं न सूत्रादायाति, किं तु तत्संख्याया एवेति चेन्मैवम्। द्विवचनादिसंज्ञा ह्यादेशनिष्ठा, ततश्च तद्विधिना द्व्येकयोरित्यस्यैकवाक्यता। न च तत्र कर्त्तरीत्यस्ति यद् द्वित्वादिविशेषणतया कथं चिद्योज्येत। ननु लविधितिबादिविध्योरप्येकवाक्यतास्तीति चेत्, तर्हि इयं वाक्यैकवाक्यता न तु पदैकवाक्यता। आदेशविधेर्लविधिलभ्यलकारानुवादेन प्रवृत्तेः। लविधौ कर्त्तृग्रहणम्। स च द्विवचनादिसंज्ञाविनिर्मुक्त एवेति। तस्माद्वाक्यनिष्पत्त्यनन्तरं तेनैकवाक्यता। लः कर्मणीति वाक्यं चार्थं विना ऽनिष्पन्नं यमर्थमादाय निष्पद्यते स एव वाच्य इति कर्त्तुर्वाच्यत्वं दुष्परिहरमिति वदन्ति। स्फुटमन्यन्मनोरमायाम्। वस्तुतस्तु लः कर्मणीत्यस्य द्व्येकयोरित्यनेनैकवाक्यत्वे लकारः सङ्ख्यावाचको निरर्थको वा स्यात्। न चैवं युक्तम्। एवं हि तिबादिवच्छानचोपि कर्तृसङ्ख्या वाच्या स्यान्न स्याच्च कर्त्ता, तिबादिवच्छानजादीनामपि लादेशत्वात्। अथ कर्त्तरिक्वादित्यत एव तत्र कर्त्ता वाच्य इति चेन्न। तेन शय्यमाने आस्यमाने चायं गत इत्यादौ भावे क्रियमाण इति कर्मणि शानचो दौर्लभ्यापत्तेः। विधायकाभावात्। अथ कर्तैव वाच्यः, कर्मभावादौ च शानचो लक्षणेति चेन्न। कर्त्तरीति व्याकरणस्यार्थनियामकस्यातिक्रमेण स्वेच्छामात्रेण लक्षणायामसाधुतापत्तेर्वक्ष्यमाणत्वात्। न च लटः शतृशानचावित्यस्यात्मनेपदविधायकैः सममेकवाक्यतया भावकर्मणोरित्यनेनेष्टासिद्धिः। सकर्मकेभ्योप्येवं सति भावे शानजापत्तेः। अस्माकं पुनर्भावे चाकर्मकेभ्य इत्युक्तत्वान्न दोषः। किं चैकवाक्यतया कर्मभा-

वरूपार्थलाभेन निराकाङ्क्षतया कर्त्तरिकृदित्यस्याविषयतया कर्त्तरि स न स्यात् । तथात्वे वा घञादिरपि कर्त्तरि स्यात् । अपि च भावकर्मणोरित्यस्य भावकर्मणो यो लकारस्तस्यात्मनेपदमेवादेश इत्यर्थो न त्वया वक्तुं शक्यः । लकारस्यानर्थकत्वात् । यदात्मनेपदं तद्भावकर्मणोरेवेत्यपि न । कर्त्तरि आत्मनेपदाभावापत्तेः । भावकर्मणोरर्थयोरात्मनेपदं स्यादित्यर्थे चोक्तसूत्रादेव तङादेः कर्मवाचकता शेषात्कर्त्तरिपरस्मैपदमित्यस्माच्च कर्तृवाचकता तिङादेः स्यात् । सकर्मकेभ्योपि भावे शानजापत्तिश्चेति दिक् । तस्मादापातत एवैकवाक्यतया भावकर्मार्थलाभ इति । तस्मात्कर्तृकर्मशानचो योगेनानूद्य विधीयमानं कर्त्तृकर्मसंस्कारकमिति जञ्जभ्यमानाधिकरणे स्थितमसम्भवदुक्तिकतामापद्येत इति ध्येयम् । यदपि भट्टैरुक्तम् । कर्तृविशिष्टसंख्याभिधानात्कर्त्तुरभिधानम् । न च विशेषणतया कर्त्तुरप्यभिधेयत्वं स्यादिति वाच्यम् । विशिष्टग्रहणं नेष्टमगृहीतविशेषणम् । अभिधानभिधाने तु न केन चिदिहाश्रिते । तथा च भावनया प्रत्यापितस्य कर्त्तुर्विशेषणत्वसम्भवान्न दोषः । न च भावनाक्षेप्यत्वस्याविशेषात्पचतीत्यत्र कर्त्रैव पच्यते इत्यत्र कर्मैव सङ्ख्यायां विशेषणमिति नियमो न स्यादिति शङ्क्यम् । यतो यस्यापि कारकं वाच्यं तस्याप्येतत्प्रसज्यते । न चोभयाश्रयं दोषमेकश्चोद्यो विचारयान्निति । ननु शब्दोपस्थितस्यैव शाब्दबोधे भानाङ्गीकाराद्भावनयाक्षिप्तस्यैव कर्त्तुः कथं शाब्दबोधविषयत्वमिति चेन्न । तद्वाचकशब्दस्यैव भावनयाक्षेपात् । अर्थाक्षेपकस्यैव शब्दाक्षेपकत्वात् । अनुपपत्तेस्तुल्यत्वाम् । तथा च तद्वाचकशब्दादेव कर्त्तृकर्मणोर्बोधः । तदुक्तम् । सर्वाख्यातेषु कर्त्रादेरिष्टा नैवाभिधेयता । या तु तेभ्यः प्रतीतिः सा संयो-

गान्तरतो भवेदिति ॥ लक्षणैव वा आक्षेपशब्दार्थः । सा चा-श्रयत्वादिना । अत एव नामजात्यादिभिः प्रश्नोत्तरभावः कर्तृ-कर्मणोः सङ्गच्छते । तस्मान्नाभिधानव्यवस्थानुपपत्तेः कर्तुर्वा-च्यत्वमिति । कृदादौ चाभिधानयुक्तिरेव तत्साधिका । अतो-न्यलभ्यत्वसम्भवेप्यगत्या तद्वाच्यत्वस्वीकार इति न प्रागुक्ता प्र-तिबन्दिरपि । कर्तृतत्सङ्ख्यान्यतरानाभिधाने वाच्यत्वे तृतीयेत्या-श्रीयतइति । अत्रेदं प्रतिभाति । देवदत्तः पचति पच्यते तण्डुल इ-त्यादिसामानाधिकरण्यादाख्यातस्य कर्तृकर्मवाचकत्वम् । न चेदमसिद्धम् । अन्यस्मिन्पचति देवदत्तः पचतीत्यप्रयोगेण त-स्यानुभवसिद्धस्य विना हेतुं कर्तृवाच्यत्वभीत्यैवापलापायोगा-त् । त्वं पचसीत्यादौ युष्मच्छब्दसामानाधिकरण्यस्यानुभवम-नुसरता सूत्रकृतानूद्य तदनुसारेण पुरुषव्यवस्थाया युष्मद्युपपदे-समानाधिकरणेस्थानिन्यपिमध्यम इत्यादिना कृतत्वाच्च । अन्य-था नीलो घटः, देवदत्तः पक्ता, ऐन्द्रं दधि, चित्रगुर्देवदत्तः, पि-ङ्गाक्षी गौः, स्तोकं पचति, ज्योतिष्टोमेन यजेते, त्यादावपि तदपला-पापत्तौ बहुव्याकुली स्यात् । न च पदार्थानामभेदबोधे समानविभ-क्तिमत्पदोपस्थाप्यत्वं तन्त्रं, तच्चात्र नास्तीति कारणबाधान्न सामा-नाधिकरण्यमिति वाच्यम् । राज्ञः सुतस्य धनमित्यादावतिप्रसक्त-त्वेन राजपुरुषः धान्येन धनी स्तोकं पचति ज्योतिष्टोमेन यजेतेत्या-दावप्रसक्तेश्चास्यतन्त्रत्वात् । अथ विरुद्धार्थकविभक्तिराहित्यं त-न्त्रम् । सुप्तिङोश्च न विरोधः । एवं च विशेष्यतासंबंधेनाभेदसंबंध-कतन्नामार्थप्रकारकशाब्दबोधं प्रति तन्नामोत्तरसार्थकविभक्त्युप-स्थित्यकालिकतन्नामसमभिव्याहृतपदजन्योपस्थितिः कारणमि-ति कार्यकारणभावः फलितः । स्तोकमित्यादौ द्वितीया त्वभेदा-र्था साधुत्वमात्रार्था वा । यद्वा विरुद्धरूपेणानुपस्थितिस्तत्र तन्नामि-

ति चेत्तर्हि, देवदत्तः पचतीत्यत्राप्यभेदबोधो दुर्वार इति सिद्धं नः समीहितम् । आख्यातस्य शक्तिकल्पना च कृतां कर्तृशक्त्या तुल्या, परं त्वाख्यातार्थभावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणमिति नैयायिकोक्तकार्यकारणभावान्तरस्य भावनाविशेष्यककर्तृविशेषणकबोधाय मीमांसकीयस्य च तस्याकल्पनाल्लाघवमस्माकमतिरिच्यते । एतेन भिन्नाभ्यां धर्माभ्यामेकधर्मिबोधकत्वलक्षणं सामानाधिकरण्यमसिद्धम् । सम्भवदन्यादृशन्तु न वार्यतइति मन्दप्रतारणमपास्तम् । अथास्तु सामानाधिकरण्यं किं तु भावनाक्षिप्तकर्त्रा भविष्यतीत्यसकृद्वार्त्तिकएवोद्घोषितमितिचेन्न । आक्षेपो हि यद्याख्यातार्थभावनयानुमानं तर्हि, धूमोयं ज्वलतीत्यादाविव तदसम्भव एव । मैत्रादिपदयोगे तदसम्भवाच्च । लक्षणा चेत्तर्हि, पिङ्गाक्ष्यादियौगिकेष्वपि द्रव्यवाचित्वं न स्यात् । मूलयुक्तेः सामानाधिकरण्यस्योक्तरीत्यैवोपपत्तेः । द्रव्यवाचकत्वसाधकान्तरस्य चाभावात् । प्रत्युत सम्बन्धादिगुणवाचित्त्वे एव लाघकमुपलभ्यते । तथाहि । घटपदात् घटत्वप्रकारकघटविशेष्यकबोधवद्दण्डी इत्यादौ दण्डसम्बन्धवानिति प्रतीतिः सर्वसिद्धा । तत्राकृत्यधिकरणन्यायेन निष्कृष्टघटत्ववत्सम्बन्धमात्रं वाच्यं स्यात् । किं च तदस्यास्त्यास्मिन्निति मतुप् सास्यदेवतेत्यादावस्येत्यर्थे मतुबादिविधानम् । अस्त्येत्यत्र प्रत्ययार्थत्वात् संसर्गः प्रधानमिति तत्रैव तेषां विधिः स्यात् । तथा च मतुबर्थे विहितबहुव्रीहेरपि स एव वाच्यः स्यात् । उक्तं चारुणाधिकरणवार्त्तिके "बहुव्रीहिः समासोयं मतुबर्थे विधीयते । अस्यात्रेति च सम्बन्धे मत्वर्थीयः प्रवर्तते" इति । युक्तं चैतत् । अत एव देवदत्तस्य गोमत्त्वमित्यत्र त्वप्रत्ययस्य संसर्गबोधकत्वं सङ्गच्छते । घटत्वमित्या-

दौ पदार्थीभूतघटत्वबोधकत्ववत् । न च प्रकृतिजन्यबोधप्रका-रस्त्वप्रत्ययार्थः संसर्गस्तु विशेष्यः तथा च कथं त्वार्थ इति वा-च्यम् । आकृत्यधिकरणन्यायेन घटत्वस्यैव वाच्यत्वात्तत्रैवो-पपत्तेः । आक्षेपितव्यक्तौ तस्य प्रकारकत्वं चात्रापि सम् । उक्तं च । यदि मतुपा सम्बन्धोभिहितस्ततः प्रकृतिप्रत्ययौ स-हार्थं ब्रूते इति गोमत्प्रातिपदिकादुत्पन्नो भावप्रत्ययः सम्बन्ध-माभिधातुमर्हति नान्यथेत्यादिना । प्रतीयते च सर्वत्र सम्बन्धः पाचकत्वं पाठकत्वमौपगवत्वमित्यादिष्विति । किं च एकहाय-न्यादिशब्दविग्रहेप्येकं हायनमस्याः, चित्रा गावो यस्य, विश्वे देवा देवता अस्ये, त्यादौ प्रत्ययार्थसम्बन्धप्राधान्येन विवरणद-र्शनात्तस्यैव वृत्तिवाच्यत्वमवसीयते । उक्तं च । यस्मिन्नन्य-पदार्थे च बहुव्रीहिर्विधीयते । तत्रापि प्रत्ययार्थत्वात्सम्बन्धस्य प्रधानतेति । न च गोमानित्यादौ सम्बन्धिप्रतीतिर्न स्यादिति शङ्क्यम् । उभयाश्रितेन सम्बन्धेनाक्षेपात्तदुपपत्तेः । तव कर्तृ-वत्सम्बन्धवच्चेति । यत्तु मतुबादेर्न सम्बन्धसामान्यं वाच्यम् । पर्यायतापत्तेः । न विशेषः । स हि सम्बन्धिरूप एव । सोपि नानाभिहितः शक्नोति तं व्यावर्त्तयितुमतः सोप्यभिधातव्यः । तथा च गोरूपस्यैकस्य सम्बन्धिनः प्रातिपदिकादुक्तत्वेपि स-म्बन्धस्योभयनिरूप्यत्वात्सोप्यभिधातव्यः सम्बन्धश्चेति शक्ति-द्वयकल्पनापत्तिरित्यतिगौरवम् । आवश्यकसम्बन्धिनैवाक्षेपा-त्तद्बोधोपपत्तावन्यलभ्यत्वं च । उक्तं च, सर्वत्र यौगिकैः श-ब्दैर्द्रव्यमेवाभिधीयते । नहि सम्बन्धवाच्यत्वं सम्भवत्यतिगौ-रवात् ॥ किं च । सम्बन्धिनैव सम्बन्धः प्रत्येतुं यदि शक्य-ते । पुनस्तस्याभिधाशक्तिं कः श्रुतेः परिकल्पयेदिति । किं च । विभक्तिवाच्यरूपेण सम्बन्धो नावगम्यते । रूपान्तरेण वक्तव्य

इति नास्ति च लक्षणम्॥ षष्ठ्यादिभिर्ह्यसत्त्वभूतः सम्बन्धोभिधीयते न तथा मत्वर्थीयेन, सत्त्वभूतसम्बन्धवाच्यत्वे च न प्रमाणम्। तस्मादनुशासनत्यागावश्यकत्वे त्वर्थाक्षिप्त एव स इति। यत्तु भावप्रत्ययः सम्बन्धं न वदेदिति। तन्न। यदा स्वसमवेतोत्र वाच्यो नास्ति गुणो ऽपरः। तदा गत्यन्तराभावात्सम्बधो वाच्य आश्रितः॥ गोमत्पदे हि गावो मतुबर्थे विशेषणम्। तासां पुरुषावृत्तित्वान्न त्वप्रत्ययेन ग्रहणम्॥ तस्य समवेतगुणाभिधायकत्वात्। तथा चागत्यार्थप्राप्तसम्बन्धाभिधायकस्त्वप्रत्यय इत्याश्रीयते। यदप्येकं हायनमस्या इति विग्रहे सम्बन्धप्राधान्यदर्शनात्तस्य समासार्थतेति। तत्रोच्यते। अभिधेयो बहुव्रीहेर्यद्यप्यस्येति कथ्यते। तथापि प्रथमान्तेन तुल्योसौ सम्प्रतीयते॥ तथाचार्थदर्शनानुसारेण चित्राणां गवामयमित्येव विग्रहो द्रष्टव्य इति स्थितं वार्त्तिके। तच्चिन्त्यम्। द्रव्यमपि न सामान्यतोभिधेयम्। पर्यायतापत्तेस्तुल्यत्वात्। न विशेषतः। स हि संसर्गः, प्रातिपदिकार्थो वा। आद्ये अप्रतीतस्यानभिहितस्य विशेषकत्वासम्भवाद्वाच्यत्वापत्तिः। द्वितीयपक्षः संसर्गवादिनोपि तुल्यः। संसर्गोपि गवां व्यावर्त्तकतया विशेषणत्वसम्भवात्। तथा च गोविशिष्ट इतिवद्गोसम्बन्ध इति बोधः संभवत्येव। उभयनिरूप्यः सम्बन्ध उभयबोधं विना कथं बुध्यतामिति चेन्न। सम्बन्धप्रत्यक्षे हि यावत्सम्बन्धिप्रत्यक्षं कारणम्। नतु शाब्दे, गोसम्बन्ध इति वाक्याद्बोधानापत्तेः। तर्हि गोसम्बन्ध इतिवाक्यवदाश्रयाक्षेपनियमो न स्यात् इति चेन्न। षष्ठ्यर्थे विहितमतुबादेर्ह्यसत्त्वभूत एव सम्बन्धोभिधेयः। अत एव सम्बन्धानामनेकत्वे तुल्यलिङ्गत्वेपि च दण्डीत्येकवचनम्। दण्डी दण्डि दण्डिनीत्यादिलिङ्गभेद-

प्रयोगश्चोपपद्यते सम्बन्धिनां तथाविधत्वे एव तादृशप्रयोगाणां दर्शनात् । एवं च सम्बन्धे लिङ्गसङ्ख्यान्वयासम्भवादन्यथानुपपन्नलिङ्गसङ्ख्यादिभिरेवाक्षेपः सम्बन्धिन आख्यातसङ्ख्ययेव कर्त्रादेः । यद्वा भावनाशब्दोपात्तभावनायाः कर्त्रनाक्षेपकत्वेप्याख्यातोपात्ताया असत्त्वभूतत्वेन तदाक्षेपकत्ववत्सम्बन्धपदोपात्तसम्बन्धस्य सम्बन्ध्यनाक्षेपकत्वेपि मतुबुपात्तस्य सम्बन्धस्यापि तत्स्यात् । अत एव विभाक्तिवाच्यरूपेणेति प्रागुक्तमपास्तम् । तथाअनवगत्यसिद्धेः । किं च लिङ्गसङ्ख्यानन्वयित्वमसत्त्वभूतत्वं षष्ठ्यादावर्थासिद्धम् । प्रत्ययार्थलिङ्गसङ्ख्यादेः प्रत्ययार्थएवान्वयसम्भवात् । सुपां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेश्च । एवं च नासत्त्वभूतत्वं षष्ठ्या वाच्यमिति विभक्तिवाच्यरूपेणेति रिक्तं वचः । तस्मात्सम्बन्धवाच्यत्वे दोषाभावादनुशासनाद्यनुरोधेन तस्य वाच्यत्वासिद्धेः। सम्बन्धेनैव सम्बन्धी प्रत्येतुं यदि शक्यते। पुनस्तस्याभिधाशक्तिं कः श्रुतेः परिकल्पयेदिति गाथा मयापि सुपठा। यत्तु भावप्रत्ययस्य समवेतगुणग्राहकत्वनियम इत्यादि। तन्न। घटादिपदेपि घटत्वस्यैवाकृत्याधिकरणन्यायेन वाच्यत्वस्वीकारेण तदनुरोधेन भावप्रत्ययस्य प्रकृत्यर्थवाचकत्वस्वीकारस्यैव लाघवादुचितत्वात्सम्बन्धस्य प्रकृत्यर्थतानङ्गीकारे त्वार्थत्वानापत्तेरपरिहारात् । प्रकृत्यर्थसमवेतवाचकत्वस्वीकारेतिगौरवापत्तेः। उक्तन्यायेन घटत्वत्वस्यैव घटपदोत्तरत्वार्थतापत्तेश्च। ननु प्रकृत्यर्थमात्रवाचकत्वे वैयर्थ्यापत्तिः प्रकृत्यैवार्थोपस्थितिसिद्धेरिति चेन्न । प्रकृत्याभिधानेपि घटत्वादेराक्षिप्तद्रव्ये विशेषणत्वेनैव तत उपस्थितत्वेन प्राधान्येन बोधार्थं पुनरुच्यतइत्युपपत्तेः, प्रकृतिप्रत्ययौ सहार्थमिति न्यायेन त्वार्थत्वे विशेष्य-

त्वस्या न्यायसिद्धत्वात् । किं चैवं घटादिपदे द्रव्यत्वादेर्दण्डी-
त्यादौ पुरुषगतरूपादेश्च तदुत्तरत्वाद्यर्थतापत्तिः द्रव्यत्वादिकं
घटपदजन्यप्रतीतौ न प्रकार इति चे, दाक्षेपपक्षे संसर्गोपि न
प्रकार इति तुल्यम् । वक्ष्यते चैतदुपरिष्टात् । चित्राणां गवा-
मयामिति विग्रह इत्यादिकं च स्फुटतरं समासशक्तौ निराकरि-
ष्यते । तस्मादुक्तयुक्तिभिः संसर्ग एव वाच्यो मतुबादेः स्या-
दिति तदर्थविहितबहुव्रीहेरपि तन्मात्रवाचकत्वे अरुणाधिकर-
णं दत्तजलाञ्जलि स्यात् पूर्वपक्षस्यैवासम्भवादिति समा-
सशक्तौ वक्ष्यामः । प्रस्थितं च गुणाधिकरणेन । तद्धितस्य
द्रव्यानभिधायकत्वे वाजिनामिक्षयोर्वाक्यविनियोज्यत्वसाम्या-
त् । न च तद्धितार्थसम्बन्धाक्षिप्तद्रव्यविधिरेव श्रौतः वाजिनं
च न तथेति वाच्यम् । एवं व्याख्याते कर्तुराक्षेपावश्यकत्वेन
नानृतमिति निषेधस्यापि श्रुत्या पुरुषार्थत्वसम्भवेन कर्तुरवाच्य-
त्वसाधनायासवैयर्थ्यापत्तेः सिद्धान्तसिद्ध्यसम्भवेन कर्त्रधिकर-
णोच्छेदप्रसङ्गाच्च । यत्तु प्राधान्येन प्रतीयमानत्वमेव शब्द-
वाच्यत्वे बीजम् । तच्चाख्यातेषु भावनाया यौगिकेषु द्रव्याणा-
मेवास्ति न तु कर्तृसम्बन्धादेः । घटारुणादिपदेषु च जाति-
गुणयोरपि तदस्त्येव । सत्त्वप्रधानानि नामानीति निरुक्तस्मृते-
ररुणाधिकरणएव तृतीयार्थसङ्ख्यादेर्गुणेनान्वयप्रतिपादनेन तुल्य-
तया जातिगुणयोः सङ्ख्यान्वयित्वरूपसत्त्वभूतत्वात्प्राधान्य-
सिद्धेः तृतीयान्तपदेषु जातावेव लिङ्गसङ्ख्यान्वयाभ्युपगमात् ।
तथा च तादृशेष्वेव प्राधान्यसाम्ये आकृत्यधिकरणं वाक्यविशे-
षनियामकमावश्यकमेवेति न तद्धानिरपीति । तत्तुच्छम् । तृती-
यान्ते यौगिकार्थसम्बन्धस्यापि सत्त्वभूततया गुणतुल्यतया
दुर्वारत्वात् प्राधान्यादाकृत्यधिकरणन्यायेन वाच्यतापत्तेरिति ।

तस्माद्वैश्वदेव्यामिक्षा पिङ्गाक्षी गौः दण्डी देवदत्त इति सामाना-धिकरण्यस्य विनैवानुपपत्तिप्रतिसन्धानं शब्दादेव प्रतीतेस्तदनु-सारेण द्रव्यवाचित्वमास्थेयम् । तच्च समप्राख्यातेपीति कर्तृ-कर्मवाचकत्वमवर्जनीयमेवेति । अत एव चित्रा गावो यस्येति सम्बन्धप्राधान्यदर्शनेपि चित्रगुर्देवदत्त इति समासे सामानाधि-करण्यानुरोधात् द्रव्यवाचित्वं विग्रहसमासयोरेतदंशे वैलक्षण्यं चाश्रीयतइति वक्ष्यते । अथैवं नीलो घट इति सामानाधिकर-ण्यानुरोधात् घटादिपदानामपि द्रव्यवाचकत्वे आकृत्याधिकरण-विरोधः । नैवम् । घटादिपदे हि घटत्वस्य वृत्त्याविषयत्वे शा-ब्दे भानायोगात् घटत्वांशे वृत्तिकल्पनावश्यकत्वेनागृहीतविशे-षणन्यायेन जातिमात्रवाचित्वासिद्धौ द्रव्यमाक्षिप्यतइति युक्तम् । प्रकृते च प्रकृत्यर्थतावच्छेदकस्यैव प्रकृतिशक्त्योपस्थितत्वात्तदु-पलक्षणीकृत्य शक्तौ दोषाभावाद् द्रव्यवाचित्वमास्थीयते। उक्तं च,

आनन्त्येपि हि भावानामेकं कृत्वोपलक्षणम् । शब्दः सुकर-सम्बन्धो न च व्यभिचरिष्यतीति ॥ यदि च घटादिपदेष्युपल-क्षणत्वमभ्युपेयते तदा केवलव्यक्तिवाच्यत्वमपि सुसङ्गतमेवेति वक्ष्यते । एवं च केवलव्यक्तिवाच्यत्वपक्षमाश्रित्य सामानाधि-करण्यं नानुपपन्नमिति सिद्धान्तरीत्यापि द्रष्टव्यम् । वस्तुतो गो-मानित्यत्र गोसम्बन्धीति बोधात्सम्बन्धी वाच्यः । वाच्यता-वच्छेदकः संसर्गः, सम्बन्धत्वं परम्परयोपलक्षणं तदादौ बुद्धिवि-शेषवत् । न च तच्छाब्दे विषयो येन घटत्वप्रतिबन्दी स्यात् सम्बन्धप्रकारकबोधस्यैवानुभवसिद्धत्वात् । अत एव दण्डि-त्वमित्यादौ त्वप्रत्ययस्य सम्बन्धबोधकत्वं सङ्गच्छतइति । न च कर्तृकर्मादिवाचकशब्दानां शक्तिवाचकत्वाद्देवदत्तादिपदैः सा-मानाधिकरण्यासम्भव एवेत्यसिद्धो हेतुरिति वाच्यम् । शक्ति-

मत्कारकमिति पक्षाश्रयणेन शक्तिमतामेव कर्त्रादिपदवाच्यत्वात् । अत एव देवदत्तः कर्त्ता कारकः कर्म इति सामानाधिकरण्यं संगच्छते । उक्तं च साक्षात्सूत्रकृतैव युष्मदस्मदादिशब्दसामानाधिकरण्यमुट्टङ्कितं सूत्रादिषु । तथोक्तं च भाष्ये । सुपां कर्मादयोऽप्यर्थाः सङ्ख्या चैव तथा तिङामिति अत एवाश्रये त्विति मूलमपि न लः कर्मणीति सूत्रविरुद्धम् । अन्यथा कर्त्तरिकृदित्यनुशासनाच्छानजादेः शक्तिमात्रवाचकत्वे सामानाधिकरण्यापलापापत्तेश्च । नित्याः षड् व्यक्तयोऽन्येषामिति वाक्यपदीये ऽन्यमतत्वेनैव शक्तिपक्षोत्थापनात्तत्पक्षस्य सिद्धान्तासम्मतत्वाच्च । धातुनोक्तक्रिये नित्यमित्यादिवक्ष्यमाणवाक्यपदीयादिभिर्भावनाश्रयत्वस्य कर्तृत्वेन फलाश्रयत्वस्य कर्मत्वेन प्रतीतेः स्वातन्त्र्येण शक्तिप्रत्ययस्यैवासिद्धेश्च । न चैवमाश्रयेत्विति मूलं सूत्रविरुद्धं स्यात् । सूत्रे कर्तृत्वकर्मत्वाभ्यां वाच्यत्वावगमात् । न च भावनांशस्य धातुलभ्यत्वादाश्रय इत्येव मूलस्य भावार्थ इति वाच्यम् । अन्यवाच्यस्यापि तथात्वस्य त्वयैवोपपादनात् । अवाच्यत्वेपि वाच्यतावच्छेदकत्वस्याकारणत्वेपि कारणतावच्छेदकत्ववदलक्ष्यत्वेपि लक्ष्यतावच्छेदकत्ववत् सुलभत्वाच्चेति शङ्क्यम् । भावनाया वाच्यतावच्छेदकत्वेनानन्तपदार्थेषु शक्यतावच्छेदकत्वापत्तौ गौरवात् । आश्रयत्वस्य चाखण्डशक्तिरूपत्वात् । तस्माद्देवदत्तः पचति पच्यते तण्डुल इति सामानाधिकरण्यात्कर्तृकर्मणी वाच्ये एवेति सिद्धम् । अपि च पचतीत्यत्र व्यापारस्येव कर्त्तुरपि प्रतीतिः सर्वानुभवसिद्धा । अत एव पचतीत्येव श्रुते कः कीदृशः किंजातीय इति प्रश्नश्चैत्रो घनश्यामो ब्राह्मण इत्युत्तरं च सङ्गच्छते । तथा च प्रतीतेः पाकानुकूलकृतिमान् पचतीति पाचक इति विवरणाच्च शक्तिपरि-

च्छेदात् कर्तृकर्मणी वाच्ये एव । अन्यथा भावनापि वाच्या न स्यात् । कर्तृकर्मणोर्भावनयैवाक्षेपसम्भवेनान्यलभ्यत्वान्न तयोर्वाच्यत्वमिति चेन्न । कर्तृकर्मभ्यां कृदादाविव भावनाया एवाक्षेपसम्भवादस्तु तयोरेव वाच्यत्वं, मास्तु च भावनाया इत्यस्याप्यापत्तेः । विवेचितं चैतदधस्तात् । एतेन कर्तृकर्मणोर्विवरणं तात्पर्यार्थविवरणम् । बोधविवरणयोर्व्युत्पत्त्यनुसारित्वेनार्थनिर्णायकत्वं वा पाकमित्यशब्दार्थकर्मत्वाविवरणवदुपपद्यतएवैतदपीति वा इतरेतरद्वन्द्वे साहित्यविवरणवद्वा नार्थनिर्णायकतेत्यादिकमपास्तम् । एवं च तुल्ययुक्त्या कर्तृकर्मणोर्वाच्यत्वमावश्यकमेवेति दिगिति विभावयामः । लःकर्मणीत्यस्य कालसंख्याभावनापुरस्कारेण प्रवृत्तौ विध्यादौ कृदादौ तद्वाच्यत्वापत्तेर्भावनाया धातुलभ्यत्वाच्चेत्यतः कर्त्रादिपुरस्कारेण प्रवृत्तौ तदादेशत्वाच्छानजादिवत्तिङस्तदर्थकत्वं दुर्वारमित्यापि वदन्ति । भावतिङां धात्वर्थानुवादकमात्रत्वान्न तदर्थोत्र वर्णितः ॥ अथैवं लडादिभिस्तत्र वर्त्तमानत्वं न बोध्येतेति चेन्न । तस्य धात्वर्थव्यापारविशेषणतया तिङो द्योतकत्वात् । वाचकत्वपक्षेप्यगत्यानुभवानुरोधेन विधायकवचनेन च तथास्वीकारात् । अथैवं कथं तत्र संख्याप्रत्ययोपीति चेन्न । तस्या उत्सर्गलभ्यत्वात् । तथाहि । भावलकारे हि संख्यान्वयिकर्तृकर्मणोऽप्रतीतेस्तत्रत्या संख्या ऽनन्वितैव । न च भावनायामेव तदन्वयोस्त्विति शङ्क्यम् । तस्या लिङ्गसंख्यान्वयायोग्यत्वेनैव धातुनोपस्थापनात् । एतदेवासत्त्वभूतत्वम् । न च भावतिङर्थसंख्याभावनयोर्धात्वर्थएवान्वय इति कुसुमाञ्जलावुक्तं युक्तम् । धात्वर्थबहुत्वे मैत्रेण स्थीयते सुप्यते इत्यादावनापत्तेः बहुवचनापत्तेश्च । बहुषुबहुवचनमित्यनुशासनस्यावर्जनीयत्वात् । अन्यथै-

कवचनमपि न स्यात् । तथा च संख्यानन्वये साधुत्वमात्राय प्रत्ययाभिधाने प्राप्ते प्रथमोपस्थितत्वादेकवचनमेव कल्प्यते अव्ययानामसंख्यत्वेन तदनुरोधेन भाष्ये तथैव व्यवस्थितेः । अथ वा द्विबह्वोर्द्विवचनबहुवचने इत्येव सूत्रं कर्त्तव्यं द्वित्वविवक्षायां बहुत्वविवक्षायां च द्विवचनबहुवचने भवत इत्यर्थः । यत्र च न तयोर्विवक्षा तत्र साधुत्वार्थमेकवचनं भवति न त्वेकत्वादिविवक्षापेक्षा । एवं च प्रकृतेप्येकत्वादिविवक्षाविरहेपि साधुत्वार्थमेकवचनमुपपद्यते इति न कश्चिद्दोषः । उष्ट्रासिका आस्यन्ते हतशायिकाः शय्यन्ते इत्यत्र भावे बहुवचनश्रवणं कथमिति चे, त्सत्यम् । भाष्यकारवचनादत्रैव बहुवचनं साध्विति हि प्रामाणिकाः ॥ तिङ इति । आदेशिनोर्थेनार्थवत्वमादायेदं बोधकत्वं शक्तिरित्यभिप्रायेण वा । निरूपितस्थले विशेषणविशेष्यभावं व्युत्पादयति । फले इत्यादि । फले, विक्लित्यादौ । प्रधानं विशेष्यः । विक्लित्तिर्व्यापारे विशेषणमित्यर्थः । तिङर्थाः कर्तृकर्मसंख्याकालाः । तत्रापि कर्तृकर्मणी व्यापारफलयोर्विशेषणे संख्या तु अनयोः । कालस्तु व्यापारे एव तथैवानुभवात् । कर्तृकर्मणोः समानपदोपात्तत्वेनान्तरङ्गत्वेनान्वये तु पचतीत्यादौ तयोरेव वर्तमानत्वप्रत्ययः स्यात्, न च तथा कस्य चिदनुभव इति वदन्ति । वस्तुतो वर्त्तमानेलडित्यत्राधिकाराद्धातोरित्येव लभ्यते तत्र धातोर्वर्तमानत्वं न तदानीं विवक्षितमिति तदर्थस्य वाच्यम्, तदर्थोपि प्राधान्याद्व्यापार एव गृह्यते इति न कर्तृकर्मफलेषु तदन्वयः । जानातीत्यत्रापि ज्ञानस्यैव फलानुकूलव्यापारत्वेन तत्रैव तदन्वयः । कर्तृकर्मणोरन्वये चातीतक्रिये कर्त्तरि पचतीत्यापत्तेः । अपाक्षीदित्यनापत्तेश्च । इतोपि व्यापारवर्तमानतादशायां विक्लित्त्यादिरूपफलस्य भावित्वात्पक्ष्यतीति

प्रयोगापत्तेः पचतीत्यनापत्तेश्च न फलेऽन्वयः । एतेन धात्वर्थे एव वर्त्तमानत्वान्वयो न तु व्यापारे आमवातजडीकृतकलेवरस्योत्थानानुकूलयत्नसत्त्वेनोत्तिष्ठतीतिप्रयोगापत्तेरिति सिद्धान्तलेशोक्तमपास्तम् । धात्वर्थफलान्वये बाधकाभावमुक्तत्वात् । यदि च फलव्यापारयोर्धात्वर्थत्वं स्वीकृत्य व्यापारे तदन्वयोऽभ्युपेयते तदास्मन्मतमेव सिद्धम् । एवमपि चिरविनष्टेपि घटे नाशस्य विद्यमानत्वेन नश्यतीति प्रयोगापत्तिरित्युपक्रान्तासिद्ध्यापत्तेश्च । व्यापारस्याविद्यमानत्वेन तथा प्रयोगासम्भवात् । पचतीत्यादौ पाकानुकूलकृतौ वर्तमानत्वान्वयानुभवविरोधाच्च । आमवातजडीययत्नश्च नोत्थानप्रयोजकः किं तु तदुद्देश्यक इति नातिप्रसङ्गः । अत एव तत्रोत्थानाय यतते नोत्तिष्ठतीत्येव प्रयोगः । न चोत्थानं करोतीति प्रयोगः । मतान्तरेऽपि यागपाकोद्देश्यककुण्डमण्डपतण्डुलक्रयणादियत्नव्यापारावादाय यागाद्यर्थं यततइतिवत्पाकयागादि करोतीति वा यजति पचतीति वा प्रयोगवारणायाधःसन्तापनयत्नसाधारण्याय च प्रयोजकताविशेषस्यैव सम्बन्धस्याभ्युपेयत्वात् । अतिप्रसक्तव्यापारादिव्यावृत्तमाख्यातशक्यतावच्छेदकमेव वदिष्याम इति चेत्, तर्हि तदेवामवातीययत्नव्यावृत्तमस्त्विति दिक् । एवं गच्छत्यादेरप्युत्तरदेशसंयोगानुकूलः क्रियारूपो व्यापार एव धात्वर्थ इति तत्रैव वर्तमानत्वान्वयः । एवं त्यजादेरप्यवधेयम् । इत्थं च पचति पच्यतइत्यत्रैकाश्रयकः पाकानुकूलो वर्तमानो व्यापार इति बोधः । एकाश्रयिका या विक्लित्तिस्तदनुकूला साम्प्रतिकी भावनेति च । अत्र कर्मणः फलद्वारा व्यापारेऽन्वयः, कर्मवाचकतण्डुलादिपदसमभिव्याहारस्थले चाख्यातोपस्थापितकर्मणस्तण्डुलादिभिः सममभेदान्वयः । एवं कर्तृप्रत्ययस्थले

कर्त्तर्यपि बोध्यम् । तथा च तण्डुलं पचति चैत्र इत्यत्रैकतण्डुलाश्रयिका या विक्लित्तिस्तदनुकूलैकचैत्राभिन्नाश्रयिका वर्त्तमाना भावना । तण्डुलः पच्यते चैत्रेणेत्यत्र चैकचैत्राश्रयिका एकतण्डुलाभिन्नाश्रयिका या विक्लित्तिस्तदनुकूला साम्प्रतिकी भावनेति बोधः । नश्यतीत्यत्रापि व्यापारएव तदन्वयः, स च प्रतियोगितासहितनाशसामग्री, अतस्तस्यां सत्यां नश्यति अतीतायां नष्ट इत्याद्युपपद्यते । जायते इत्यादिषड्भावविकारेषु नाशस्यापि गणितत्वादुत्पत्तिवत्सोपि चरमक्षणसम्बन्ध एव, तद्दशायां नश्यति तदत्यये नष्ट इत्यप्यत एव सङ्गच्छतइत्यप्पय्यदीक्षिताः । नश्यति नङ्क्ष्यति नष्ट इत्यादिप्रत्ययेन यथायथं वर्त्तमाना भविष्यत्यतीता चोत्पत्तिः प्रतियोगित्वं च लक्ष्यते । तथा च तादृशोत्पत्तिमन्नाशप्रतियोगीति बोधः । अत एव नाशस्य नित्यत्वात्सर्वदा नश्यति श्वो नश्यति पटादौ परश्वो नङ्क्ष्यति प्रपूर्वदिने नष्ट परेद्युर्नष्ट इत्यापत्तिर्निरस्तेति नैयायिकनव्याः । आकाशोस्तीत्यादौ चैकाकाशाभिन्नाश्रयकः स्वस्वरूपधारणानुकूलो वर्तमानो व्यापार इत्यादि स्वयमूह्यम् । नन्वत्र फलं न भावनायां विशेषणं विशेष्यतासम्बन्धेन प्रकृत्यर्थप्रकारकशाब्दबोधं प्रति प्रत्ययजन्योपस्थितेर्हेतुताया अन्यत्र क्लृप्तत्वात् । भावनायाश्च प्रत्ययार्थत्वाभावादिति चेत्, मैवम् । धातुभिन्नप्रकृत्यर्थप्रकारकबोधे एव तस्या हेतुत्वात् । फलव्यापारयोर्भिन्नशक्तिवादिभिर्नैयायिकनव्यादिभिरप्येवमेवाभ्युपेयत्वात् । तथापि धात्वर्थप्राधान्ये किं मानमिति चेत् । भावप्रधानमाख्यातमिति निरुक्तवचनमेव ॥ वस्तुतो बोधे व्युत्पत्तिग्रहः कारणं तथा च व्युत्पत्त्यनुसारेणैव बोधः । एवं चाख्यातार्थकालकर्तृधात्वर्थफलप्रकारकशाब्दबोधे धातुजन्यभावनोपस्थितिर्विषयत-

या हेतुरिति कार्यकारणभावरूपाकांक्षा वाच्येति न कश्चिद्दोषः ॥ ननु भावना फलांशविशेष्यास्तु प्रथमान्तार्थविशेषणं तु कुतो न स्यात् भावनाप्रकारकशाब्दबोधं प्रति प्रथमान्तपदजन्योपस्थिति-र्हेतुरिति कार्यकारणभावस्य सुवचत्वात् । न च भावप्रधानमा-ख्यातमिति वचनविरोधः । आख्यातार्थभावनाया धात्वर्थे प्राधान्यमात्रस्य तदर्थत्वात् । अन्यथा सत्वप्रधानानि नामानी-ति शेषवचनविरोधात् । एवं च पचतीत्यत्र पाकानुकूलकृति-मान् देवदत्त इति शाब्दबोध इति नैयायिकाभ्युपगतमेव कथं नाभ्युपेयतइति चेत् । मैवम् । एवं ह्याख्यातार्थकर्तुरनन्वया-पत्तेः । आख्यातप्रथमान्तार्थयोरभेदाभ्युपगमेपि पक्का गच्छती-तिवत्पचतिकल्पं गच्छतीत्यापत्तेः । ईषदसमाप्तपाककर्त्ता गच्छ-तीत्यन्वयसम्भवात् । सिद्धान्ते च क्रिययोः परस्परानन्वया-न्नातिप्रसङ्गः । किं च पचतिकल्पं पचतःकल्पं पचन्तिकल्पमि-त्यपि न स्यात् । सुबर्थसङ्ख्यायाः प्रकृत्यर्थे प्रधाने कर्त्तर्य्येवा-न्वयात् । द्वित्वबहुत्वाभ्यां द्विवचनाद्यापत्तेः । आचार्य्यकल्पा-वाचार्य्यकल्पा इतिवत् । सिद्धान्ते च भावनायाः सङ्ख्या-न्वयायोग्यत्वात्सङ्ख्याया अप्राप्तावौत्सर्गिकमेकवचनमेवोपपद्य-ते । अपि च नृत्यक्रियां पश्येत्यभिप्रायेण पश्य नृत्यतीति प्र-युज्यमानं वाक्यमपि न सिद्ध्येत् । किं च मुख्यतः प्रथमान्ता-र्थस्य विशेष्यत्वाभ्युपगमे पश्य मृगो धावतीति भाष्याद्यभ्युपे-तमेकवाक्यं न स्यात् । प्रथमान्तार्थमृगस्य धावनक्रियाविशेष्य-त्वाभ्युपगमे तस्यैव दृशिक्रियायामन्वये कर्म्मत्वाद् द्वितीयापत्तेः । न च सत्यां द्वितीयायामप्रथमासमानाधिकरणत्वाच्छता दुर्वा-र इति वाच्यम् । एवमपि द्वितीयाया दुर्वारत्वात् । एवं चैता-दृशवाक्याभाव एव स्यात् । किं चापाक्षीद्देवदत्तो ऽवेहीत्यत्र

श्रवादेः प्रसङ्गाभावादेवदत्तमिति द्वितीया दुर्वारैव । न चात्र प्राक् तामिति कर्म्माध्याहर्त्तव्यम् । उत्कटधावनक्रियाविशेषस्यैव दर्शनकर्मतयान्वयस्य प्रतिपिपादयिषितत्वात् कर्माध्याहारे तदसम्भवापत्तेः, तं पश्येति वाक्यभेदापत्तेश्च । एकवाक्यत्वे भाष्यकारादिभिः साधुत्वकथनात् । तस्मात्क्रियाया एव कर्मत्वेनान्वयः तद्वाचकश्च धातुर्न प्रातिपदिकमतो न द्वितीया, तथा च धात्वर्थभावनाप्रकारकशाब्दबोधं प्रति कृज्जन्योपस्थितिवद्धातुजन्यभावनोपस्थितिरपि कारणं कल्प्यते। अत एव पक्त्वा व्रजतीत्यादौ पाकक्रिया व्रजनक्रियायां सामानाधिकरण्योत्तरकालादिसम्बन्धेन विशेषणमतस्तल्लाभे क्त्वादेर्भावे विधानं सङ्गच्छतइति वक्ष्यते इति दिक् ॥ २ ॥

तत्राश्रयस्य क्व फले ऽन्वयः क्व च व्यापारइत्युपोद्घातसङ्गत्या निरूपयति ॥

**फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः ।**
**व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयान्वयम् ३**

तङादयः फले आश्रयान्वयं द्योतयन्ति शबादयस्तु व्यापारे । अथ शबादयो न द्योतकाः किं तु वाचका एव लकारविधानस्य तत्तदर्थपुरस्कारेणैव कर्त्तरिशबिति शपोपि तत्तदर्थपुरस्कारेणैव विधानात् । तस्माच्छबेव वाचकः लकारस्तु द्योतक इति वैपरीत्यं किं न स्यादिति । यत्त्वाशीर्लिङि लिटि चादादिषु जुहोत्यादिषु च शबाद्यभावात्तत्प्रतीतिर्न स्यादतो लकार एव वाचको युक्त इति । तन्न । तिङप्रभावे ऽपि शबादिसन्निधानमात्रादशाम्यकारि गच्छेत्यादौ तत्प्रतीतेस्तत्राप्युक्तदोषतादवस्थ्यादिति चेत् । मैवम् । अत्र लुप्तं स्मृतं बोधक-

मिति परमते शिष्यमाणं लुप्यमानार्थाभिधायीत्यस्मन्मते च समाधानस्य सुकरत्वात् । यद्वा कर्त्तरिशबित्यत्र सार्वधातुकइत्यनुवर्त्त्य कर्त्रर्थे सार्वधातुके परे धातोः शप् स्यात् इत्यर्थः, तथा च सार्वधातुकस्य कर्त्रर्थत्वावश्यकत्वे शबादीनां द्योतकत्वमात्रं कल्प्यते लाघवादिति । एवं यगादावप्यूह्यम् । तङ् परस्मैपदिभ्य एवोत्पन्न उपसर्गादिप्रयुक्तो न चेत् । अत एव एधते निविशते इत्यादिव्याप्तिः । आदिना चिण्वदिट्, यथा कारिष्यते घट इत्यादौ । कुषिरञ्जोः प्राचांश्यन्निति श्यन्परस्मैपदे च द्योतके । तथा कर्मस्थभावकेषु रक्ष्याति घटः स्वयमेवेत्यादौ । लिङादावप्येवंरीत्या प्रकरणाद्येव द्योतकमिति । एतेनाख्यातस्य कर्तृकर्म्मभावेषु शक्तौ पचतीत्यादौ सर्वत्रैव भावनावत्कर्तृकर्मभावानां प्रत्ययापत्तिः शक्तिसत्त्वादिति निरस्तम् । यगादेस्तात्पर्यग्राहकत्त्वकथनादिति ध्येयम् ॥

नन्वेवं "पच्यते ओदनः स्वयमेवे" त्यादौ "क्रमादमुं नारद इत्यबोधि स" इत्यादौ व्यभिचारः कर्म्माविवक्षायां कर्त्तरि लकारे सति कर्मवत्कर्मणातुल्यक्रिय इत्यनेन यगात्मनेपदचिण्चिण्वदिटामतिदेशेन यगादिसत्वेप्याश्रयस्य फलेनान्वयात् । अबोधीत्यत्रापि बुध्यतेः कर्त्तरि लुङ् दीपजनेत्यादिना चिण् चिणोलुगिति तस्य लुक् इत्यभ्युपगमेपि फलेनान्वयादित्याशङ्क्याह ॥

**उत्सर्गोयं कर्मकर्त्तृविषयादौ विपर्य्ययात् ।**
**तस्माद्यथोचितं ज्ञेयं द्योतकत्वं यथागमम् ॥ ४ ॥**

कर्मकर्तृविषयादौ क्रियते घटः स्वयमेवेत्यादौ पच्यते ओदनः स्वयमेवेत्यादौ क्रमादित्याद्यादिपदग्राह्यम् । शाब्दबोधस्तु पूर्वोक्तसामान्यविशेषज्ञानहेतुकैकनारदाभिन्नविषयकं यज्ज्ञानं

तदनुकूला एककृष्णाभिन्नाश्रयिका ऽतीता भावनेति । पच्यते ओदनः स्वयमेवेत्यत्र चैकौदनाभिन्नाश्रयिका पाकानुकूला भावनेति बोधः । इत्थमन्यत्राप्यूह्यम् । यथोचितमिति । अननुगतमेव तत्तद्वचनानुसारेणेत्यर्थः । वस्तुतः सकर्मकधातुसमभिव्याहृतभावसाधारणाविधिविधेययक्चिण्त्वेन कर्मद्योतकतेति बोध्यम् ॥ ४ ॥

अथ सूचीकटाहन्यायेन सोपपत्तिकं वाक्यार्थमुपवर्ण्य फलव्यापारयोरिति प्रतिज्ञातं धातोर्व्यापारवाचकत्वं व्यवस्थापयति ॥

**व्यापारो भावना सैवोत्पादना सैव च क्रिया ।**
**कृञो ऽकर्मकतापत्तेर्न हि यत्नोऽर्थ इष्यते ॥ ५ ॥**

पचति पाकमुत्पादयति पाकानुकूला भावनेत्यादिभावनावाचकपदैर्विवरणात्सा वाच्यैवेति भावः । व्यापारपदं फूत्कारादीनामयत्नानामपि वाच्यतां बोधयितुम् । अत्र नैयायिकाः । व्यापारो वाच्य इत्ययुक्तम् । व्यापारत्वस्योपाधित्वेन शक्यतावच्छेदके गौरवात् । फूत्कारत्वादेरपि गुरुत्वादननुगतत्वाच्च नावच्छेदकत्वम् । किं तु कृतित्वस्यैव जातिरूपतया लाघवेन शक्यतावच्छेदकत्वौचित्यात्कृतिरेव वाच्या वक्तव्या । किं च । करोतेर्यत्नार्थकत्वं तावदावश्यकम् । यत्नजन्यत्वाजन्यत्वप्रतिसन्धानात्पटाङ्कुरयोः कृताकृतव्यवहारात् । तदुक्तमाचार्यैः । कृताकृतविभागेन कर्तृरूपव्यवस्थया । यत्न एव कृतिः पूर्वा परस्मिन्सैव भावनेति ॥ कृतित्वस्यैव लाघवेन शक्यतावच्छेदकत्वौचित्याच्च । व्यापारस्य कृञर्थत्वे च कारकमात्रं कर्तृपदार्थः स्यात् । करोत्यर्थभूताश्रयस्यैव कर्तृपदार्थत्वात् । इत्थं च

तिप्रसङ्गात्पृथक्त्वृत्तिज्ञानस्य हेतुत्वे मानाभावादिति चेन्न। अनन्तकार्यकारणभावे वृत्तिप्रवेशे गौरवमपेक्ष्याकांक्षायां पदजन्यज्ञानत्वेनैव प्रवेशस्योचितत्वात्। तथा च घटपदादाकाशस्य समवायेन देवदत्तयज्ञदत्तादेश्च जनकतयोपस्थितस्य शाब्दबोधविषयतापत्तेर्वारणाय विषयतया शाब्दबोधत्वावच्छिन्ने वृत्तिजन्योपस्थितेस्तथाहेतुत्वमावश्यकम्। अस्माकं पदैः पदार्थानां वाक्याद्वाक्यार्थस्य बोधाभ्युपगमाद्विशेषणविशेष्यभावव्यत्यासासम्भवाच्च। यथोपस्थितानामेव वाक्यशक्त्या संसर्गबोधात्। यत्तु घटशक्तं पदं घटान्वयबोधं जनयतीत्येव नियमस्वीकारान्नानुपपत्तिरिति। तन्न। एवमपि वृत्तिज्ञानकार्यकारणभावानुरोधेन शक्तिकल्पनावश्यकत्वात्। उक्तरीत्यैवोपपत्तौ घटान्वयबोधं प्रति घटशक्तपदज्ञानत्वेन हेतुतेत्यनेककार्यकारणभावान्तरकल्पने गौरवाच्च। न चैवमपि पदार्थशाब्दत्वमेव वृत्तिज्ञानकार्यतावच्छेदकं वाच्यमिति वाच्यम्। संसर्गस्यापि वाक्यार्थसंसर्गादिपदार्थत्वात्। तत्तत्समभिव्याहृतपदार्थबोधत्वमवच्छेदकमित्यपि न। अनन्तकार्यकारणभावप्रसङ्गात्। अथ विशेष्यत्वप्रकारत्वादिसम्बन्धेन शाब्दबोधत्वमेव वृत्तिज्ञानकार्यतावच्छेदकमस्तु। तेन च सम्बन्धेन न शाब्दत्ववाक्यार्थांशे अतो न तत्र वृत्तिः कल्प्या। तत्र लाघवाद्विषयतैव तत्कार्यतावच्छेदिका। तस्या एकस्यास्त्रितयसाधारणाया अभावात्। विशेष्यत्वादित्रयमेव सामान्यशब्देनाभिधीयते। विशेष्यादित्रितयव्यवहारानुरोधेन विषयतात्रयस्यावश्यकत्वात् इति चेत्, मैवम्। ज्ञानातिरिक्तविषयताया मानाभावात्तज्ज्ञानसम्बन्धेन शाब्दत्वस्यैव कार्यतावच्छेदकत्वात्। तत्तद्विषयविशिष्टज्ञानस्यैव विशेष्यत्वादिरूपत्वात्। अतिरिक्तविषयतापक्षेऽप्येवमेव व्यवहारवैलक्षण्योपपत्तौ त्रैविध्यानौचि-

स्यात्। एवं च तत्रैव विशेष्यप्रकारविशिष्टविषयतायाः सम्बन्धत्वे विपरीतं गौरवं स्यात्। दण्डीति बोधोत्तरं दण्डिमानिति बोधात्तज्जनकतावच्छेदिका नायं दण्डीत्यादिज्ञानप्रतिबन्धकतावच्छेदिका च दण्डीत्यत्र दण्डपुरुषसंयोगसाधारण्येका विषयता वाच्या। सैव शक्तिज्ञानकार्यतावच्छेदिकास्ताम्। अत्र दण्ड इतिशब्दादयं दण्डीत्यादिवारणं तु वाक्यशक्त्यैवेत्यपि वदन्ति। एवं सत्यपि यद्यशब्दार्थ एव वाक्यार्थस्तर्हि पदार्थोऽपि तथैव स्यात्। उक्तं हि वाक्यपदीये। "अशाब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत्। एवं सति च सम्बन्धः शब्दस्यार्थेन हीयत" इति॥ तस्माद्वाक्यार्थवाचकं वाक्यमिति सिद्धम्। अत एव तस्य वाक्यार्थत्वकिंवदन्ती सङ्गच्छतइति विभावयामः। माध्वास्तु, न वाक्यार्थबोधकतया वाक्यस्फोटसिद्धिः पदानामेवान्विताभिधायकत्वात्। पदैरेवार्थप्रतीत्युपपत्तौ तत्र मानाभावात्। तदेतत्तृतीयाध्यायद्वितीयचरणसमाप्तावुक्तमनुव्याख्याने। "कर्तृकर्मक्रियाणां तु पूर्तौ कोन्योन्वयो भवेत्। अपूर्तिश्चेत्पदैरुक्तैः किं नृशृङ्गेण पूर्यत" इति। अत्र जयतीर्थः। कर्मेत्युपलक्षणं जिज्ञासितानां पदार्थानामित्यर्थः। भवेत्। प्रतिपादनीय इति शेषः। स्फोटमन्वयप्रतिपादकं वदता तत्र प्रमाणं वाच्यम्। तच्च न। अन्वयबोधस्य पदैरुपपत्तेरिति भावः। एवमनङ्गीकारे बाधकमाह। अपूर्तिरिति। अन्वयस्येत्यादि। नृशृङ्गेण। स्फोटेन। अप्रमाणकत्वात्तत्साहश्यम्। पदादन्वयबोधवादिनो लाघवं पदानामावश्यकत्वात्, स्फोटवादिना गौरवं निष्प्रमाणकस्फोटस्य तस्यान्वयबोधकत्वस्य च कल्पनीयत्वादिति भाव इति व्याचख्यौ। तस्माद्वाक्यार्थप्रतीत्यर्थं न स्फोट इत्याहुः। तदेतत्तुच्छम्। पदानामेवान्विताभिधायकत्वं घटादिपदमितरान्वितघटे

शक्तामिति व्युत्पन्नस्यापि घटमित्यानुपूर्वीज्ञानतात्पर्यज्ञानादिमते-
पि च घटकर्मकानयनमिति बोधः प्रागुक्तकार्यकारणभावग्रहा-
भाववतोपि भवेत् । न चेष्टापत्तिः । विशेषणविशेष्यभावे विनि-
गमनाविरहात्सामान्यत एव शक्त्या चेतरान्वितो घटः, इतरान्वितं
कर्मत्वमित्येवापत्तेः । न घटीयं कर्मत्वमिति । तथा शक्त्यनङ्गी-
कारात् । घटः कर्मत्वमानयनं कृतिरित्यत्रेतरान्विते कर्मत्वे तादृशे
आनयने इत्यादिशक्तिग्रहवतो बोधापत्तेश्च । अत एव तत्रैवानु-
व्याख्याने " यदा शेषविशेषाणामुक्तिः सामान्यतो भवेत् । प-
दैकेनाप्युत्तरेण विशेषावगतिर्भवेत् ॥ अतः सामान्यतो ज्ञातः प-
दान्तरवशात्पुनः । भवेद्विशेषतो ज्ञातस्तेन स्यादन्वितोक्तिते"-
ति प्रथमाध्याये चोक्तं सुधायाम् । शक्तिश्चैवान्विते स्वार्थे इति
कारिकाव्याख्यायां विशेषान्वयप्रतिपत्त्यर्थं पदान्तरसमभिव्या-
हारोपयोग इति, पदान्तरसमभिव्याहाराद्विशेषप्रतिपत्त्युपपत्तेरि-
ति चोक्तं । तस्मात्तादृशसमभिव्याहारकार्यकारणभावावश्यकत्वे
मास्तु पदानामन्विते शक्तिरिति सिद्धम् । किं च । सखण्डवाक्य-
स्फोटखण्डनमेतदखण्डस्य वा । नाद्यः । पदसमूहरूपस्य तस्य
नृशृङ्गतुल्यतोक्तिविरोधापत्तेः । नान्त्य इति तु वक्ष्यते । तस्मा-
त्स्फोटपदश्रवणमात्रात्खण्डनं तन्मताज्ञानविजृम्भितमेवेति ध्येयम् ।
एतेन कार्यान्विते शक्तिरपास्ता । के चित्तु पदानामन्विताभि-
धायकत्वे घटमानयेत्यत्र बोधचतुष्टयापत्तिः । इतरान्वितो घटः,
तथा कर्मत्वं, तथैवानयनं, तथैव कृति,रिति । न च तत्रापि चैत्रो
घटमानयतीत्यादौ घटीयं कर्मत्वं तदीयमानयनं तदीया कृतिस्तद्वां-
श्चैत्र इति विशेष्यभेदप्रयुक्तवाक्यभेदापत्तिः । अस्माकं सशक्यो भ-
वतां पुनरशक्योप्याकांक्षादिलभ्य इत्येतावन्मात्र विशेषादिति वाच्यम् ।
नहि विशेष्यभेदादावृत्तिमापादयामः किं तु शक्तिभेदात् । मम तु

घटप्रकारककर्मत्वाविशेष्यकशाब्दबोधे घटपदोत्तरं द्वितीया इत्यादिकार्यकारणभावनानात्वाविरहान्न दोष इत्याहुः। एतेन यन्नृसिंहाश्रमैस्तत्त्वविवेकादावुक्तम्। वृत्तिं विना शाब्दबोधविषयत्वासम्भवाद्वृत्तिर्वाक्यार्थविषयिणी स्वीकार्या। सा चातिरिक्ता गौरवान्नेति क्लृप्तपदार्थशक्तिरेव तद्विषयिणी कल्प्यते। पदानामन्वयसामान्ये शक्तौ तु विशेषमविषयीकृत्य सामान्यबुद्धेरपर्यवसानात्तत्तत्पदसामान्यशक्तिभिरेव समभिव्याहृतपदोपस्थापितपदार्थविशेषनिरूपितान्वयविशेषः सेत्स्यतीत्येकशक्तिलाघवम्। किं चैकपदप्रयोगेऽप्यन्वयविशेषस्य नियमेन जिज्ञासादर्शनात्तस्याश्चान्वयसामान्यज्ञानपूर्वकत्वात्तज्ज्ञानस्य च शब्दादन्यतोऽसम्भवाच्छब्द एवान्वितमभिधत्तइति वाच्यम्। दृष्टे जम्बीरफलादौ रसविशेषजिज्ञासावद्भविष्यतीति चेन्न। तत्र नियमेन तदभावात्। अन्यथा वैशेषिकमतइव व्याप्तिप्रतिसन्धानदशायामेव शब्दादर्थसंसर्गः प्रतीयतइति शब्दोऽप्यप्रमाणं स्यात् इति। यदप्यपरे, अन्वयांशे शक्त्यनभ्युपगमे घटः कर्मत्वमानयनं कृतिरिति पदजातादन्वयधीः स्याद्योग्यतादेः सत्त्वात्। न चैतादृशं पदजातं शिलाशकलमिवांकुरस्वरूपायोग्यम्। एवं सति विपरीतव्युत्पन्नस्यापि बोधानापत्तेः। न च शक्तिभ्रमात्तस्यान्वयधीः। स्वरूपायोग्यस्य सहकारिशतकेनापि कार्याजनकत्वात्। तस्मात्स्वरूपयोग्यमेवान्वयांशे शक्तिज्ञानरूपसहकारिसत्त्वाद्विपरीतव्युत्पन्नं प्रत्यन्वयबोधकम्। अन्यं प्रति तद्रहितत्वान्नेत्यन्वयांशे शक्तिरवश्यमुपेयेति विवरणाचार्यानुयायिनो वदन्ति। तदप्यपास्तम्। बोधकतारूपायाः शक्तेरन्वयबोधस्यापि जायमानत्वात्तदंशे स्वीकार आवश्यक इति सत्यम्। परं तु सा वाक्ये एव स्वीकर्तव्या न तु पदे। तथा सति समभिव्याहारोपि कारणमि-

तितज्ज्ञानस्य हेतुत्वे गौरवापत्तिरित्युक्तम्। घटः कर्मत्वमित्यादा-वाकांक्षाज्ञानविरहाद्बोधविरहः । अन्वयांशे शक्तिज्ञानवतोऽप्य-बोधाच्चेत्युक्तम्। एवं जिज्ञासानुरोधादन्वयसामान्ये शक्तिरि-त्यप्यसङ्गतम्। दृष्टे समीचीनफले रसादिजिज्ञासावदुपपत्तेः। तर्हि तद्वदेवात्रापि जिज्ञासानियमो न स्यादिति चेत्, दिष्टापत्तेः। किं चैवं ह्यन्वयो विशेषरूपेण शक्यः स्यात्। जिज्ञासायास्तथा-त्वात्। ज्ञानेच्छयोः समानप्रकारकत्वेन हेतुहेतुमद्भावात्। अ-न्यथा द्रव्यत्वादिना ज्ञाते सुवर्णत्वादिनाऽज्ञाते तेन रूपेणेच्छा-पत्तेः। नन्वेवं सति जिज्ञासोच्छेदः। येन रूपेण ज्ञानं वृत्तं तेन रूपेण सिद्धिसत्त्वादिच्छाया असंभवात्। येन च रूपेण न ज्ञा-तमेव तेन रूपेण कारणाभावेनासम्भवादिति चेन्न। सिद्धत्व-ज्ञानस्यैव सर्वत्र प्रतिबन्धकत्वात् तदभावादेव जिज्ञासोपपत्तेः। घटो मेऽस्त्वितीच्छायामसिद्धेपि तस्मिन् तत्सिद्धत्वाज्ञानादिने-च्छानिवृत्तेर्दर्शनात्। न च येन रूपेण यत्रेच्छा तेन रूपेण सि-द्धत्वधीरेव प्रतिबन्धिकेत्यपरत्रास्तु। अत्र तु सा सिद्धिरेव प्र-तिबन्धिका कल्प्यतां लाघवात्। घटज्ञानं मे जायतामितीच्छा-यां जाते तस्मिंस्तत्सिद्धत्वप्रतिसन्धानमन्तरेणैवेच्छानिवृत्तेरानुभ-विकत्वादन्यथा गौरवाच्चेति वाच्यम्। चैत्रस्य ज्ञानं भवत्वितीच्छा-यामजाते च तस्य ज्ञानं जातमिति सिद्धत्वज्ञानादिच्छानिवृत्तेः स-र्वानुभवसिद्धाया अपलापापत्तेः। सिद्धेर्व्यधिकरणत्वेन प्रतिब-न्धकत्वासम्भवाच्च। तदानीं मे ज्ञानं भवत्वितीच्छायां तदानीं मे जातमित्यादिकालान्तरीयज्ञानविषयकासिद्धत्वज्ञानेनापि प्र-तिबन्धाच्च। तस्मान्न जिज्ञासानुपपत्तिः। अथ वा पूर्वं विशे-षतः संसर्गावगमेपि स आपातरूप एव। कथमन्यथा ब्रह्मजि-ज्ञासा स्यात्। प्रपञ्चितं चैतद्विवरणतत्त्वविवेकादावेवेति ध्ये-

यम् । एतेन सामान्यतो ज्ञाते विशेषतो जिज्ञासेति वदन्तः सर्वेऽप्यपास्ताः । तथा च सामान्यतोऽन्वयः शक्य इत्यसङ्गतम् । अथ सामान्यतोऽन्वयः शक्यस्तेनानुमिते विशेषे जिज्ञासेति नोक्तदोष इति चेन्न । तथासत्यनुमानेन संसर्गोपस्थित्यैवोपपत्तेः शब्दप्रामाण्योच्छेदप्रसङ्गात् । अन्यथा वैशेषिकमतइवेति स्वोक्तिविरोधश्च । पदार्थैरेवानुमिते विशेषे जिज्ञासासम्भवाच्च सामान्यतोऽप्यन्वयस्याशक्यत्वं स्यात् । अपि च पदार्थवाक्यार्थयोर्नियमस्य पूर्वं ग्रहात्फलविशेषदर्शनाद्रसविशेषस्येव जिज्ञासा नानुपपन्ना । न चैवं शब्दस्यापि भवद्रीत्येव प्रमाणत्वं न स्यादित्युक्तामिति वाच्यम् । न भवेदेव यदि नानुमितं न साक्षात्कृतं किं तु शाब्दादेवावगतामित्यनुभवो न स्यात् । तथा चैतादृशानुभवादाकांक्षाज्ञाननिर्वाह्यविशेषणविशेष्यभावाद्यनुरोधाच्च शब्दः प्रमाणान्तरम् । न त्वत्र भवद्रीतिः साध्वी । पठितविस्मृतशास्त्रस्य बोधादर्शनाच्छक्तिस्मरणमुद्बुद्धः शक्तिसंस्कारो वा हेतुरिति मतद्वयेपि भवन्मते स्वातन्त्र्येण तत्प्रामाण्यासिद्धेः । तथाहि बोधकत्वं हि शक्तिरिति विवरणाचार्यादिभिरुक्तम् । तच्च बोधकारणत्वन्तच्च शब्दस्य स्वज्ञानद्वारा लिङ्गस्यैवानुमितौ । तथा च कारणताया व्याप्तित्वात्तज्ज्ञानं व्याप्तिज्ञानमेवेति कथं नानुमानविधया प्रामाण्यम् । उद्बुद्धो व्याप्तिसंस्कार एव हेतुरिति स्वीकर्तॄणां भवतां परं सुतरां दोषः । तस्मात्प्रमाणान्तरेण संसर्गोपस्थित्यसम्भवात्तत्र शक्तिरित्ययुक्तमेवेति दिक् । यत्तु पदार्थास्तत्स्मृतिर्वा शाब्दबोधे हेतुर्न तु पदज्ञानं वाक्यज्ञानं वा । व्यभिचारात् । उक्तं हि । "पश्यतः श्वेतमारूपं ह्रेषाशब्दं च शृण्वतः । खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीरिति ॥ तन्न । तथा सति चक्षुरादिना पदार्थोपस्थितौ शाब्दबोधा-

पत्तेः । शब्देनायमर्थो बुद्ध इत्यनुभवाच्च । पश्यत इत्यादाव-शाब्दत्वानुभवादनुमानेनैव निर्वाहाच्चेति दिक् । तस्माद्वाक्यार्थ-वाचकं वाक्यमिति सिद्धो वाक्यस्फोटः । नन्वेवं पदार्थवद्वा-क्यार्थोपि नानुभूयेतेति चेन्न । न तावद्वाक्यार्थप्रतीतिरनुभवः । स्वर्गनरकादिकं शृण्वतोपि स्वर्गं नरकं वानुभवामीत्यप्रतीतेः किं तु स्मृतित्वादिव्याप्यमन्यथा वा शाब्दत्वादिकं जातिरनुभवब-लात् । तत्कारणं पुनरुक्तरीत्या वाक्यज्ञानमिति । नन्वेवमपि न पदज्ञानवाक्यज्ञानयोः सम्भवः । उत्पत्तिपक्षे एकदा तदभावा-त् । अभिव्यक्तिपक्षेप्येकदा तदभावात् । तथा च न वर्णसमूह-रूपपदप्रत्यक्षं सुतरां तत्समूहरूपस्य वाक्यस्येति चेन्न । दर्शना-न्तरेप्युक्तदोषताद्वस्थ्यात् । अथ प्रत्येकवर्णानुभवजनितसंस्का-रसहकृतेनान्त्यवर्णप्रत्यक्षसमये सदसदनेकविषया पदप्रतीतिरेवं वाक्यप्रतीतिश्चोपपद्यतइति मतम् । तच्चिन्त्यम् । एवं हि गिरिर्भुक्तमग्निमान् देवदत्तेनेत्यत्रैव वाक्यज्ञाने समूहालम्बनरूपे विशेषाभावाद्बोधापत्तेः । सरो रसः नदी दीन जरा राजेत्या-दावप्युपस्थितेस्तुल्यत्वाद्बोधाविशेषापत्तेश्चेति । यत्तु जयतीर्थेनो-क्तम् । अनुभवक्रमोपहितानामेव तेषां स्मृत्यावगाहनान्न क्रम-व्युत्क्रमयोरविशेष इति । तत्तुच्छम् । अनुभवस्मृत्योः क्रमे निय-माभावात् । दृश्यते च प्रपूर्वेद्युरनुभूतस्य स्मरणम् । किं च सं-स्कारस्मरणयोः समानविषयत्वात्क्रमस्य च संस्काराविषयत्वेन न स्मरणविषयत्वम् । एवं च समूहालम्बनरूपं स्मरणमपि घ-काराकारटकारा इति भवेन्न तु घट इत्येतादृशमिति । अथोत्त-रवर्णप्रत्यक्षकालेऽव्यवहितोत्तरत्वसम्बन्धेन पूर्वपूर्ववर्णवत्त्वमुत्त-रोत्तरवर्णे, एवं तदुत्तरवर्णप्रत्यक्षकाले उपस्थितविशिष्टतद्वर्णव-त्त्वमुत्तरवर्णे सुग्रहमिति तादृशानुपूर्वीघटितं पदत्वं सुग्रहमेवं वा-

क्येपीति मतम् । सममेतदस्माकमपीति एतेनैतदनुपपत्त्या ऽख. ण्डस्फोटाभ्युपगमः कैयटोक्तो न श्रद्धेयः ॥

इदानीमखण्डपक्षमाह ॥

**पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ॥६८॥**
**वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन ।**

पदे पचतीत्यादौ न वर्णाः । तत्र दृष्टान्तव्याजेनाह । वर्णेष्विति । यथा न वर्णेष्ववयवास्तथेत्यर्थः । इवेति पाठः सुगमः । एवं वाक्येप्याह । वाक्यादिति । अत्यन्तं विवेको नास्ति । अयं भावः । वाक्यं पदं चाखण्डमेव । अनन्तवर्णकल्पने माना-भावात् । ककारादिकं शृणोमीतिप्रतीतिर्मानामिति चेन्न । तस्याखण्डपदार्थविषयत्वात् । तत्तद्वर्णोत्पादकत्वेनाभिमतवायुसंयोगविशेषाभिव्यक्ताखण्डपदार्थस्यैव कत्वादिना प्रतीत्युपपत्तेः । अथाखण्डपदार्थस्यैव व्यञ्जकवैचित्र्यात्कत्वादिना प्रतीतौ ककार उत्पन्न इति न स्यात् । स्फोटस्योत्पत्त्यभावात् । व्यञ्जकनिष्ठाया उत्पत्तेस्तत्रारोपाभ्युपगमे ज्ञानादीनामपि नित्यतापत्तिः । किं च घटादेरपि कपालसंयोगविशिष्टस्फोटरूपत्वापत्तिर्नित्यत्वापत्तिश्चेति चेन्न । सत्कार्यवादिना नित्यताया ज्ञानादिगताया इष्टत्वस्य वक्ष्यमाणत्वात् । घटादिकं चाविद्याकल्पितो मृद एवावस्थाविशेषः । आविद्यकजलाहरणादिकार्यानुरोधेन स्वीकरावश्यकत्वात् । उत्पत्त्यादिप्रतीतिरपि वक्ष्यमाणरीत्या नानुपपन्नेति । नन्वेवं विलक्षणो वायुसंयोग एव तद्धेतुरिति न्यायाद्वाचकोपि स्यादिति चेन्न । प्रत्यक्षोपलभ्यमानककारादेरेव वाचकत्वस्यानुभवसिद्धत्वात् । स्फोटस्य च शृणोमीत्यनुभवादावश्यकत्वात् । तस्माद्वायुसंयोगनिष्ठं तत्तद्वर्णजनक-

तावच्छेदकं वैजात्यमादायैव ककार इत्यादिप्रत्ययस्तार इत्यादिवत्। स्पष्टं हि भामत्यां तारत्वादि वायुनिष्ठं वर्णेष्वारोप्यतइति देवताधिकरणेऽभिहितम्। अस्मिंश्च पक्षद्वये वर्णाप्यनावश्यका इति चोक्तं शब्दकौस्तुभे। तथा च प्रत्यक्षाद्वाचकत्वान्यथानुपपत्त्या तदेवेदं पदं तदेवेदं वाक्यमिति प्रतीत्या चाखण्डस्फोटः सिध्यतीति ध्येयम्। यत्तु प्रथमाध्यायप्रथमचरणे उक्तमनुव्याख्याने। 'शक्तिश्चैवान्विते स्वार्थे शब्दानामनुभूयते। अतोऽन्विताभिधायित्वं गौरवं कल्पनेऽन्यथे'ति। व्यवहारेणान्विते एव शक्तिरनुभूयते। पदानामिति त्यक्त्वा शब्दानामित्युक्तिः प्रकृतिप्रत्ययोरप्यन्विताभिधानमिति बोधयितुम्। परमतं दूषयति। गौरवमिति। अन्यथाकल्पने वाक्यं वाक्यार्थबोधकमिति कल्पने गौरवमिति वाक्यमेवाखण्डं कल्पनीयम्। तस्यार्थप्रत्यायनशक्तिश्च कल्पनीयेति गौरवमिति भाव इति जयतीर्थः। तत्तुच्छम्। अर्थप्रतीत्याद्यन्यथानुपपत्त्या तस्यावश्यकल्प्यत्वात्। अन्वितशक्तेश्च स्फुटतरं प्राङ्निषिद्धत्वात्। किं च गौरवं तवैव विपरीतम्। अनन्तवर्णादेः कल्पनात्। यत्त्वत्राह जयतीर्थो नार्थप्रतीत्यन्यथानुपपत्त्या तत्सिद्धिः। तथाहि। किमयं स्वरूपतोऽर्थप्रत्यायकः प्रतीतो वा। नाद्यः। सर्वदार्थबोधापत्तेः। अन्त्ये किमन्यथानुपपत्त्या तत्प्रतीतिरुत प्रमाणांतरेण नाद्यः। अन्योन्याश्रयात्। प्रतीते स्फोटे अर्थप्रतीतिस्तया च तत्कल्पनमिति। नान्त्यः। प्रमाणान्तराभावात्। एकं पदमेकं वाक्यं शृणोमीति प्रत्यक्षेण तद्ग्रह इति चेन्न। विचार्यतां तर्हि किमयं प्रत्ययो वर्णानवगाहते न वेति। आद्ये ऽस्तु तेषामेव वाचकता। आवश्यकत्वात्। अन्त्ये प्रतीतिबाध एवेति। तदसुद्धम्। एकं पदमित्यादेर्वर्णविषयस्यापि तत्रोक्तरीत्या मानत्वोप-

पत्तेरिति । अत एव ध्वनिरुभयसिद्ध एव । तथा च ध्वनिस्फोटयोर्मध्ये नित्यवर्णाङ्गीकारे गौरवात् । मानाभावाच्च । ध्वनीनामेव गत्वादिमत्त्वं तएव च वर्णाः । एवं च सा वर्णावली तत्तदर्थविशेषगागृहीतसम्बन्धा स्फोटतदेकत्वाद्यभिव्याञ्जिका । गृहीतसम्बन्धो वा । नाद्यः । काव्यादिश्रवणे तत्तदर्थैरगृहीतसम्बन्धस्यापि इदमेकं पदमिदमेकं वाक्यमित्यादिस्फोटस्य तत्संख्यायाश्च प्रतीत्यापत्तेः । न द्वितीयः । एवं हि स्फोटाभावेप्येकार्थाभिव्यञ्जकत्वरूपमेकं धर्ममादायैवैकं पदमित्युपपत्तेनानियोपपत्त्या तत्सिद्धिः । उक्तं च । 'यस्त्वेकप्रत्ययः सोपि बाधकेन बलीयसा । औपाधिकतया नीतस्तस्मात्स्फोटो न मानभागि'ति । एवं वाचकत्वमपि तादृशस्यैव स्यादिति न साप्यनुपपत्तिः । नापि तदेवेदं पदं तदेवेदं वाक्यमिति प्रतीत्या तत्सिद्धिः । तदेवेदं नखं तएते केशाः सोयं समुद्र इतिवदुपपत्तेः । अतिरिक्तकेशादिकमनुभवानारूढमिति चेन्न । गौरित्यत्रापि गकारौकारविसर्गातिरिक्तस्फोटानुभवस्य कस्याप्यभावात् । किं च । पर्यायशब्देष्वेक एव स्फोटो नाना वा । घटकलशादिपर्यायाभिव्यक्ते स्फोटे गृहीतशक्तिकस्य पुंसो ऽप्रसिद्धपर्यायश्रवणोपि प्रागगृहीतशक्तिकस्यैव स्फोटस्य तेनाभिव्यक्त्यार्थप्रतीत्यापत्तेः । न च तत्पर्यायाभिव्यक्ते स्फोटे शक्तिग्रहस्तत्पर्यायश्रवणेर्थधीहेतुरिति वाच्यम् । एवं हि प्रतिपर्यायं शक्तिग्रहावश्यम्भावे तत्तत्पर्यायगतशक्तिग्रहहेतुताया एवोचितत्वात् । तथा सति शक्तिग्रहत्वेनैव हेतुत्वे लाघवाच्च । अन्यथा तत्पर्यायाभिव्यक्तगतशक्तिग्रहत्वेन तत्त्वेनवच्छेदकगौरवात । न द्वितीयः । अनन्तपदार्थानां तेषां शक्तिं चापेक्ष्य क्लृप्तवर्णेष्वेव शक्तिकल्पनस्य लघुत्वात् । तस्मात्स्फोटवादो ऽयुक्त एवेति न्यायरत्नमणिपरिमलयोर्निष्कर्षो-

प्यपास्तः । वर्णप्रत्यक्षस्यापि तत्र मानताया स्वीकारात् । पर्यायस्थलेपि एकैव शक्तिः परं त्वानुपूर्व्येवावच्छेदिका । वर्णानामपि तदतिरिक्तानामभावेनोक्तबाधकाभावादित्युक्तम् । ये तु वर्णानां तदतिरिक्तध्वनीनां वा स्वीकारपक्षेपि स्फोटस्य वाचकत्वं समर्थयन्ते । वर्णातिरिक्तः स्फोट एव वाचकत्वान्यथानुपपत्त्या कल्प्यते । न च वर्णा वाचका इति युक्तम् । अनभिव्यक्तानां वाचकत्वेतिप्रसङ्गादभिव्यक्तेश्चासम्भवात् । प्रत्यक्षे विषयस्यापि हेतुत्वात् । न च स्मरणं सम्भवति । एवमपि वर्णानामतीतत्वेन करणत्वायोगात् । तज्ज्ञानं करणमिति पक्षेपि पदार्थस्मरणोपयोगिनस्तस्यासम्भवात् । न च पूर्ववर्णानुभवजन्यसंस्कारसहकारेण श्रोत्रेणैकदा स्मरणं युक्तम् । तदेकमनेकं वा । आद्ये क्रमाभानात् सरो रस इत्यादौ विशेषो न स्यात् । अन्त्ये ज्ञानयौगपद्यापत्तिः । एवमेकं पदमेकं वाक्यमिति प्रतीतिरपि तत्र मानम् । न चैकं वनमितिवत्सा । वनराश्यादेरप्यतिरिक्तत्वात् । किं च तत्रैकदेशावच्छिन्नत्वोपाधेरेकत्वेन सोपाधिरेव प्रतीतिः स्यात् । प्रकृते चोपाधेरसंभवेन तदसम्भवात् । न चैकार्थबोधहेतुत्वं तथा । व्याससमासयोरपि प्रसङ्गात् । नाप्यविशिष्टैकार्थप्रत्ययजनकत्वम् । समासेष्वव्याप्तेः । अघट इत्यत्र प्रकृत्यंशेतिव्याप्तेश्च । अस्मन्मते चाखण्डं वाचकमेकं स्फोटमादायैकत्वप्रत्ययः, तद्व्यञ्जकाश्च वर्णाः । तदस्वीकारे ध्वनयः । प्रतीतिवैलक्षण्यमपि ध्वनिकृतम् । तदुक्तं वाक्यपदीये । 'यथा मणिकृपाणादौ रूपमेकमनेकधा । तथैव ध्वनिषु स्फोट एक एव विभिद्यत' इति । सादृश्यादिप्रतीतिरपि व्यञ्जकध्वनिनिबन्धनैव । आहचैवं कैयटोपीत्याहुः । स्यादयं प्रागुक्तस्तेषां दोषः । किं च । तत्रैवार्थबोधानुपपत्तिः । वर्णानां प्रत्येकं व्यञ्जकत्वं

समुदितानां वा । नाद्यः । प्रत्येकास्फोटप्रतीतौ तावतैवार्थबोधापत्तेः । नान्त्यः । त्वदुक्तरीत्यैवासम्भवात् । सम्भवे वा तद्धेतोरिति न्यायेनार्थबोधस्यापि तत एवोपपत्तेर्न वाचकत्वान्यथानुपपत्तिरपि । अथ त्वन्मतेप्येष दोषः । तत्तद्वर्णोत्पादकत्वाभिमतवायुसंयोगानां प्रत्येकमभिव्यञ्जकत्वं समुदितानां वेति विकल्पगणग्रासादिति चेत् । अत्रोच्यते । प्रत्येकमेव संयोगा अभिव्यञ्जकाः परं तु के चन कत्वेन के चन हत्वेनेत्यनेकैः प्रकारैः । अत एव वर्णानां तदतिरेकास्वीकारोऽप्युपपद्यते । तच्च वायुसंयोगादिनिष्ठमेव तत्रारोप्यते । एवं चाव्यवहितोत्तरत्वसम्बन्धेन घवत्वं टकारे गृह्यते । एतादृशपदज्ञानेकारणतायां अविवादात् । परं स्वव्यवहितोत्तरत्वं स्वज्ञानाधिकारणोत्पत्तिकज्ञानविषयत्वं वाच्यम् । अत एव घज्ञानानंतरज्ञानविषयत्वरूपानुपूर्वीज्ञानामित्यादिनैयायिकवृद्धानां व्यवहारः । एवं च न कश्चिद्दोषः । यत्तु श्रूयमाणशब्दे किमयं हालाहलशब्दः किं वा हलाहलः किमयं मरकतशब्दः मकरतशब्दो वा । किमयं कुशशब्दः कुशशब्दो वेति सन्देहे यथा तथास्तु विपरत्नदर्भवाचकोभवत्वेवेत्यादि निश्चिन्वतो बोधो न स्यात् । स्फोटाभिव्यक्तौ स्पष्टाभिव्यक्त्यापत्तेः । अनभिव्यक्तौ बोधकाभावादिति न्यायरक्षामणावुक्तम् । तच्चिन्त्यम् । वर्णसमूहरूपपदज्ञानं कारणमिति स्वीकर्तॄणां दर्शनान्तराणामपि तुल्यत्वात् । तदर्थज्ञापकत्वज्ञानं च ममापि सममिति । यद्वा । किञ्चित्किञ्चित्प्रत्येकमेव स्फोटाभिव्यक्तिर्जायते । अग्रे अग्रे विशदा जायते । पूर्वं जातापि नार्थबोधोपयोगिनी । यथा रत्नतत्त्वस्यैकदा दर्शनेपि नाभिव्यक्तिः, वारंवारं दर्शने तु भवति । उक्तं च । सामस्त्येन तु तद्व्यक्तिः सर्वान्ते मणितत्त्ववदिति । ननु भतिवेत्यादावर्थ-

बोधापत्तिरिति चे,त्तत्रापि वाचकसत्त्वादर्थबोधापत्तिः । वर्णानुपूर्वीनियामकनियम्याभिव्यक्तेरर्थबोधोपयुक्तत्वात् । न च दृष्टान्तो विषमः । एतादृशजातिमानमुकशब्दवाच्य इत्यत्रैव दर्शनान्तराणामपेक्षणादिति वाच्यम् । प्रथमदर्शने जातेरवगमे एतादृशजातिमानमुकशब्दवाच्य इत्यस्यापि ग्रहणापत्तेः । अस्माकं पुनर्जात्यग्रहादेव विलंबः । तथा च विजातीयप्रत्यक्षाज्जातिग्रहवद्विजातीयाभिव्यक्त्यार्थबोध इति । अथ प्रथमदर्शने एव जातिर्गृह्यते परं पुनस्तज्जात्यवच्छिन्नवाचकं न स्मर्यत इति चेन्न । ममापि स्फोटो व्यज्यते । अर्थस्मरणं पुन र्जायतइत्युपपत्तेः । पदतदर्थयोः शक्तिलक्षणसंम्बन्धस्य परस्परस्मारकत्वाविशेषात् । विजातीयाभिव्यक्तेः पदस्मारकत्ववद्विजातीयाभिव्यक्तेरर्थस्मारकत्वादिति दिक्। यत्तु वर्णानां व्यञ्जकत्वेप्येवमेवोपपत्तिरिति तन्तुच्छम् । एवं हि स्फोटासिद्धेरुक्तत्वात् । अत एव च घकाराविशिष्टटकार एव व्यञ्जकः पूर्वपूर्ववर्णविशेषितोत्तरवर्णविषयकप्रत्यक्षाभ्युपगमात् । एतेन प्रथमादिवर्णैरविशदस्फोटाभिव्यक्तिर्नानुभवसिद्धेति निरस्तम् । समाध्यन्तरसत्त्वादिति न्यायरक्षामाणिस्थः स्फोटवादमङ्गीकृत्य समाधिः प्रत्युक्तः । ग्रन्थकृतस्त्वाहुः । वर्णमालायां पदमिति प्रतीतेर्वर्णातिरिक्त एव स्फोटः । अन्यथा कपालातिरिक्तघटासिद्धिप्रसङ्गश्चेति दिक् इति सुधीभिर्विभावनीयम् ॥ ६८ ॥

नन्वेवं शास्त्राप्रामाण्यप्रसङ्गः पदवाक्ययोरखण्डत्वात् । शास्त्रस्य च प्रकृतिप्रत्ययाभ्यां पदव्युत्पादनमात्रार्थत्वादित्याशङ्कां समाधत्ते ॥

पञ्चकोशादिवत्तस्मात्कल्पनैषा समाश्रिता ॥६९॥

## उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः ।

उपेयप्रतिपत्त्यर्थेत्यन्तेनान्वयः । तथाहि । भृगुर्वारुणिर्वरुणं पितरं ब्रह्म पृष्टवान् । स उवाच । अन्नमिति । पुनरस्योत्पत्त्यादिकं समीक्ष्य पृष्टवान् । पुनः प्राणो ब्रह्मेति । तस्यापि तथात्वं बुध्वा पृष्टवान् । ततो मन इति । तस्याप्यशितमन्नं त्रेधा भवति यत्स्थूलं तत्पुरीषं यन्मध्यमन्तन्मांसं यदणीयस्तन्मन इति श्रुतावुत्पत्तिश्रवणात्पृष्टवान् । ततो विज्ञानमय इति । तस्यापि वृत्त्युपहितत्वेन तथात्वं बुध्वा पृष्टवान् । तत आनन्दो ब्रह्मेति । पुनर्वस्तुतत्त्वं प्राप्य स्थितइति तु केचिद्व्याचक्षते । तन्न। पञ्चमस्य तत्रानुपायत्वात् । अकोशत्वाच्च । तस्य ब्रह्मत्वात् । तस्मान्न भृगुवल्लीहोदाहर्तव्या । किन्त्वानन्दवल्ली । तत्रत्या हि पञ्चापि कोशा उपाया एव । तत्र हि ब्रह्मपुच्छं प्रतिष्ठेत्यत्र श्रूयमाणमेव ब्रह्मपदं मुख्यब्रह्मसमर्पकम् । अत एवाधारत्वार्थकः पुच्छशब्दोप्युपपद्यते । लांगूलासम्भवेन मुख्यार्थस्य बाधितत्वात् । कथं तर्ह्यानन्दमयोभ्यासादिति वैयासिक सूत्रमिति चेत् । आनन्दमयशब्दस्य तद्वाक्यशेषे श्रूयमाणब्रह्मपदे तात्पर्यादित्यादि शङ्करभगवत्पादप्रभृतिभिः प्रपञ्चितम् । एवञ्च यथा पञ्चकोशा अपि सर्वाधारब्रह्मबोधनायैवोक्ताः न तु वास्तवमेषां ब्रह्मत्वं तथैव प्रकृतिप्रत्ययादिभिर्विचारोप्यखण्डस्फोटबोधनोपाय इति भावः । ननु प्रत्यक्षस्य स्फोटस्य श्रवणादितोपि बोधसम्भवान्न शास्त्रं तदुपाय इति चेत्तत्राह । उपाया इति । उपायस्योपायान्तरादूषकत्वादिति भावः । अत एव केचित्सुप्रत्ययं केचित्सिप्रत्ययं केचित् रुप्रत्ययं च विदधाति तदेतदभिप्रेत्याह वाक्यपदीये । "उपायाः शिक्ष्यमाणानां बाला-

नामुपलालना: । असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते"
इति । अत्र वदन्ति । नैतच्छास्त्रं स्फोटज्ञानार्थं पञ्चकोशवदुपायः शास्त्रज्ञानं विनापि गामानयेति वाक्यमात्रव्युत्पन्नस्य पामरादेरपि शाब्दबोधात् । तस्य स्फोटज्ञानं विना बोधानुपपत्तेस्तज्ज्ञानं च शास्त्रमन्तरेणेति व्यभिचारात् । शास्त्रस्योपयान्तरत्वे च शास्त्रजन्यस्फोटज्ञाने तृणजन्यतावच्छेदकमिव वन्हौ वैजात्यं वाच्यं तच्च न, प्रमाणाभावात् । किं च प्रकृतिप्रत्ययादेः काल्पनिकत्वेन शशविषाणकल्पतया तेन न स्फोटात्मकवस्तुज्ञानसंभावः । पञ्चकोशादेश्च सदसद्विलक्षणताया अद्वैतशास्त्रे व्युत्पादितत्वादिति । अत्रोच्यते । भाषासंस्कृतसाधारणः स्फोट एव वाचकः तज्ज्ञानं च श्रौतप्रत्यक्षादिरूपमपीति सत्यम् । किं तु वर्णवत्प्रकृतिप्रत्ययापभ्रंशोऽपि स एव । एवं च प्रकृतिप्रत्ययादिभिर्व्युत्पादनपूर्वकं तज्ज्ञानं तत्पूर्वप्रयोगद्वारा शारीरशुद्धिहेतुर्यज्ञादिरिवान्तःकरणस्य । तथा च "तत् द्वारमपवर्गस्य वाङ्मलानां चिकित्सितम् । पवित्रं सर्वविद्यानामधिविद्यं प्रकाशते"
इति । "इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् । इयं सा मोक्षमाणानामजिन्हा राजपद्धतिः ॥ अत्रातीतविपर्यासः केवलामनुपश्यति" इति च वाक्यपदीयं सङ्गच्छते । एवं च विजातीयज्ञानएव शास्त्रस्योपयोग इति न तृणादिवद्व्यभिचारः । यत्तु अलीका प्रकृतिप्रत्ययकल्पनेति । तन्न । पञ्चकोशादिवदस्यापि सदसद्विलक्षणाया एव दिक्प्रदर्शनमात्रेणोपपादयिष्यमाणत्वादिति दिक् । एवं रेखागवयन्यायेनापि शास्त्रमुपाय इत्यप्याहुः ॥ ६९ ॥

ननु वर्णानां स्फोटात्मकत्वे कत्वगत्वादिकं तन्निष्ठं व्यञ्जकवायुनिष्ठं वा । नाद्यः । तस्य नित्यत्वेन ककार उत्पन्न इति न

स्यात् । अनित्यत्वे ऽनुगतः ककार इति प्रत्ययो न स्यात् क-त्वस्य ककाररूपनाममात्रत्वापत्तेश्च । अन्त्ये भ्रमत्वं कादिप्रतीतीनां स्यादित्यत आह ॥

**कल्पितानामुपाधित्वं स्वीकृतं हि परैरपि ।**
**स्वरदैर्घ्याद्यपि ह्यन्ये वर्णेभ्यो ऽन्यस्य मन्वते ७०**

कुत्र स्वीकृतं तदाह । स्वरेत्यादि । उदात्तत्वादिकं ध्वनि-निष्ठमिति स्वीकारादिति भावः । एवं दीर्घत्वादिकमपि । आ-दिना ह्रस्वत्वादिकमपि गृह्यते । अयं तेषामभिप्रायः । गकारा-दयो वर्णास्तावदेकैका एव, प्रहरात्पूर्वमनुभूयमानस्य सोयमिति प्रत्यभिज्ञानात् । न च गत्वावच्छिन्नप्रतियोगिताकभेदाभावस्त-द्विषयः । व्यक्त्यतिरिक्तगत्वानङ्गीकारात् । अयं गकार इति चेदं रूपमितिवदुपपद्यते । न च गत्वत्वानाकार इत्यनयोरविषा-पत्तिः । सह प्रयोगश्च न स्यादिति शङ्क्यम् । प्रतीतौ गत्व-त्वस्यापि भानाद्विशेषसम्भवात् । सहप्रयोगस्यापि घटत्ववान्घट इतिवदुपपत्तेः । भिन्नेषु घटादिषु घटत्वावच्छिन्नप्रतियोगिताकभे-दाभावसत्वात्सो यमिति प्रतीत्यापत्त्या व्यक्त्यभेदस्यैव तत्र विष-यत्वावश्यकत्वाच्च । प्रत्यभिज्ञाया व्यक्तिविषयत्वे बाधकाभावाच्च । न च गकार उत्पन्न इति प्रतीतिरेव बाधिका । तस्याः व्यञ्ज-कध्वनिनिष्ठोत्पत्त्यादेः परम्परासम्बन्धेन वर्णनिष्ठत्वविषयत्वे-नाप्युपपत्तेरतिरिक्तवर्णासाधकत्वात् । परम्परया वर्णनिष्ठत्वा-भ्युपगमाच्च न भ्रमत्वम् । साक्षात्सम्बन्धांशे भ्रम इत्यवशिष्य-ते । तदपि सोयमित्यत्र व्यक्त्यभेदांशे तव भ्रमत्ववत्तुल्यं परं तु ममातिरिक्तवर्णतत्प्रागभावध्वंसकल्पनागौरवापत्तिर्नेति लाघव-मतिरिच्यते । तव तु तत्स्यादिति महदनिष्टम् । किं च । प्राग-

सत्त्वे सति सत्त्वरूपाया उत्पत्तेर्न वर्णेषु ग्रहणमानुभविकम् । अत एव वर्णमुच्चारयतीति प्रत्ययो न तूत्पादयतीति प्रत्ययो व्यवहारश्च । उच्चारितत्वं च ताल्वोष्ठसंयोगादिजन्याभिव्यक्तिविशिष्टत्वम् । तस्य चेदानींतनता सूपपादा । तथा च प्रागनुभूतेनेदानींतनानुभूतस्याभेदसिद्धौ तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यतीति न्यायेन नित्यतैव । नन्वेवं स्त्रीप्रभवोयं शुकप्रभवोयमिति प्रतीतिस्तच्छ्रवणात्स्त्रीशुकाद्यनुमानं च न स्यात् । न च वैजात्यं वायुनिष्ठम् । तदग्रहेपि वैजात्यबोधात् । नापि ध्वनिनिष्ठम् । तत्र तस्मिन्मानाभावात् । तदुत्पादकशङ्खाद्यभावाच्च । किं च । सेयं गुर्जरी सेयं दीपकलिका इत्यादावपि नाशो न स्यादिति चेन्न । स्त्रीशुकादिजन्यतावच्छेदकं ताल्वोष्ठसंयोगे तदभिघातजवायौ वा विद्यमानवैजात्यं वर्णेष्वारोप्यत इत्यभ्युपगमात् । अत एव तारत्वादिरूपविरुद्धधर्माध्यासाद्भेद इति निरस्तम् । न च वाय्वग्रहे तन्निष्ठजात्याद्यग्रहः । येन यस्य धर्मो गृह्यते तेन तदपीति नियमादिति वाच्यम् । बहिरिन्द्रियेषु व्यभिचारेण नियमाभावात् । चक्षुषः प्रभायाः स्पर्शनस्य वायोः रूपस्पर्शमात्रस्य रसनादेश्च रसादिमात्रस्य ग्राहकताया नैयायिकैः स्वीकारात् । अस्तु वा स्त्रीशुकादिव्यंग्यस्तारत्वादिश्च वर्णनिष्ठो जातिविशेषः । न च तेषां कश्चिद्विरोधः । योयं रामेणोक्तः स एवेदानीं कृष्णेनोच्यतइति । योयं तारो मया श्रुतः स एवेदानीं मन्द इति च प्रतीतेः । गुर्जरीदीपादिस्थलेपि मानान्तरेण नाशसिद्धौ सोयमित्यस्य भ्रमत्वं अन्यथा तत्रापीष्ट एव नाशाद्यभावः । न चैवं वायुताल्वोष्ठसंयोगादेर्गत्वं कार्यतावच्छेदकमपेक्ष्य तत्प्रत्यक्षत्वं त्वया वाच्यम् । तथा च गौरवमिति वाच्यम् । प्रत्यक्षत्वावच्छिन्नविषयितया गत्वस्यैव कार्य-

तावच्छेदकत्वात् । नन्वेवं घटोपि नित्य एव कपालसंयोगादिकं व्यञ्जकं भविष्यतीति चेन्न । प्रागसत्त्वे सति सत्त्वरूपाया उत्पत्तेस्तत्र गृहीताया विना बाधकं त्यागायोगात् । अत्र तद्ग्रह-विपरीतग्रहयोः सत्त्वेन तदयोगात् । सत्कार्यवादाभ्युपगमे त्विष्टापत्तेश्च । न च गकारादेर्विना व्यञ्जकमननुभवेन्धकारस्थ-घटवत्सन्देहापत्तिः । दोषाद्यभावादुपपत्तेः । अन्यथोत्पन्नत्वा-दिसन्देहोपि किं न स्यात् । एवं च वीचीतरङ्गादिन्यायेनानेक-वर्णकल्पनायां गौरवमपास्तम् । तस्मान्नित्या एव वर्णाः । त-स्माद्यथा गकारादिप्रतीतिस्तथा स्फोटप्रतीतिरपि गत्वादिरूपे-णोपपन्नेति नोक्तशङ्केति भाव इति सुधीभिर्ध्येयम् ॥ ७० ॥

## इति व्यक्तिस्फोटनिरूपणम् ॥

बोपदेवोक्तयुक्त्या जातिस्फोटमाह ॥

**शक्यत्वइव शक्तत्वे जातेर्लाघवमीक्ष्यताम् ।**
**औपाधिको वा भेदोस्तु वर्णानां तारमंदवत् ७१**

अयमभिप्रायः । गकारादिव्यक्तयस्तावदवश्याभ्युपेतव्याः । न चोक्ता रीतिः साध्वी । तथा सति सोयं गकार इतिवद्यो मया हकारः श्रुतः सोयं गकार इत्यापत्तिः । एकस्यैवाखण्डपदार्थस्य सकलवर्णरूपत्वात् । णकारोयं न गकार इत्यनापत्तेश्च । किं च स्फोटे गत्वाद्यतिरिक्तमभ्युपेयं न वा । आद्ये तदेव गकारो-स्तु वर्णातिरिक्तगत्वाभावस्य वर्णनित्यतावादे शङ्करभगवत्पाद-प्रभृतिभिः सिद्धान्तितत्वात् । तथा चातिरिक्तस्फोटकल्पनएव गौरवम् । वर्णानामेव वाचकत्वोपपत्तौ तत्र मानाभावश्च । अ-न्त्ये यकारादिप्रतीतिविरोधः । वायुसंयोगादिवृत्तिवैजात्यमेव तत्तद्रूपेण प्रतीयतइति चेन्न । प्रतीतेर्विना बाधकं भ्रमत्वायोगात् ।

अस्तु वा वायुसंयोग एव गकारोपि तस्यातीन्द्रियत्वं दोष इति चेन्न । तद्गतधर्मवदेवोपपत्तेरिति गतमतिरिक्तस्फोटकल्पनया । तस्मात्सन्त्येव वर्णाः । तथा च यया शक्त्या जातिरेव । तथा शक्तापि । अन्यथा बहूनां वर्णानां वाचकत्वे गौरवं स्यात् बलवद्बाधकवशात्प्रत्येकं वाचकत्वस्य चास्वीकारात् । इदं घटपदमिति प्रतीत्या घटपदज्ञानकारणतावच्छेदककोटिप्रविष्टतया च जातिविशेषस्यावश्यकत्वात् । न च वर्णानुपूर्व्यैव प्रतीतिकारणत्वयोर्निर्वाहः । घटत्वादेरपि संयोगविशेषविशिष्टमृदैवान्यथासिद्ध्यापत्तेः । तस्मात्सा जातिरेव शक्ता तादात्म्येन तदवच्छेदिका चेति । ननु सरो रस इत्यादौ जात्योः सत्त्वाविशेषादर्थबोधभेदो न स्यादित्यत आह । औपाधिको वेति । वा त्वर्थे । उपाधिरानुपूर्वी भेदः कारणीभूतज्ञानस्य । उपाधिप्रयुक्तज्ञानवैलक्षण्ये दृष्टांतमाह । वर्णानामित्यादिना । आनुपूर्वीविशेष एव जातिविशेषाभिव्यंजक आकारविशेष इव घटत्वादे, स्तथा च नोक्तदोष इति भावः ॥ ७१ ॥

ननु जातेः प्रत्येकवर्णेष्वपि सत्त्वात्प्रत्येकादर्थबोधापत्तिस्तुल्यैवेति प्रत्येकं वर्णा एव वाचकाः किं न स्युरित्यत आह ॥

**अनेकव्यक्त्यभिव्यंग्या जातिः स्फोट इति स्मृता ।**
**कैश्चिद्व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिता ७२**

अयं भावः । त्रिविधजातिस्फोटेषु वर्णपक्षे यद्यप्ययं दोषस्तथापि पदवाक्यपक्षे नायम् । वर्णेषु तस्या व्यासज्यवृत्तित्वात् । तत्रापि पूर्ववत्पदार्थवाक्यार्थयोर्वाक्यपदस्फोटौ वाचकत्वेन स्वीक्रियेते । तथा चानेकाभिर्व्यक्तिभिर्वर्णव्यक्तिभिरभिव्यंग्या जातिः स्फोट इति स्मृता, योगार्थतया । एतेन

स्फोटस्य सदातनत्वात्सर्वदार्थबोधापत्तिरित्यपास्तम् । कैश्चि-द्व्यक्तय एव ध्वनय इत्यभ्युपेयतइति समुदायार्थः । उक्तं हि काव्यप्रकाशे । बुधैर्वैयाकरणैः प्रधानीभूतस्फोटव्यंग्यव्यञ्जक-स्य शब्दस्य ध्वनिरिति व्यवहारः कृत इति ॥ ७२ ॥

ननु का सा जातिस्तत्राह ॥

सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ॥
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः ७३

प्रतिभावम् । प्रतिपदार्थम् । एतच्च 'सम्बन्धिभेदात्सत्तैव भिद्यमाना गवादिषु । जातिरित्युच्यते तस्यां सर्वे शब्दा व्यव-स्थिताः ॥ तां प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते । सा नित्या सा महानात्मा तामाहुस्त्वतलादय' इति वाक्यपदीये । नित्यं द्रव्य-मिति प्रतीकमादायासत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्द वाच्यमित्यर्थः । ब्रह्मराशिरित्यादाय ब्रह्मतत्त्वमेव शब्दस्वरू-पतया भातीति कैयटे च स्पष्टम् । एवं वाच्यं वाचकं च ब्रह्मै-वेति भावः ॥ ७३ ॥

ननु प्रकृता जातिरेव नास्ति । पदंपदमित्यानुगतबुद्धेर्वर्णा-नुपूर्व्यैवोपपत्तेस्तस्या अपि नानात्वे तु परम्परया वर्णस्तज्जाति-र्वा नियामिकास्तु । न च घटाद्यपि न सिध्येदिति शङ्क्यम् । इष्टा-पत्तेः । मृदएवावस्थाविशेषरूपत्वात्तस्य, अत एव वाचारम्भणं विकारोनामधेयं मृत्तिकेत्येव सत्यमिति श्रूयते । व्युत्पादितं चैत-त्तदनन्यत्वमारम्भणशब्दादिभ्यः पटवच्चेत्यादिना ऋषिपुंगवेन भगवता व्यासेन, अतएवाकृतिरित्यादाय ब्रह्मदर्शने गोत्वादि-जातेरप्यसत्वादानित्यत्वम् । आत्मैवेदं सर्वमिति श्रुतिवचना-दिति कैयटः । शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते, समारम्भस्तु

भावानामनादिब्रह्मशाश्वतमिति वाक्यपदीयेपि । तदेतन्मनसि निधायाह ।

**इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम् ।**
**ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः ॥ ७४ ॥**

नामरूपे व्याकरणवाणीति श्रुतिप्रसिद्धा द्वयी सृष्टिः तत्र रूपस्येव नाम्नोपि तदेवतत्त्वं, जन्ममरणादिकं तद्वत्प्रपञ्चश्च तत्राविद्या कल्पितइति वेदान्ततत्त्वमस्मा कमपीष्टमेव । उक्तंहि वाक्यपदीये । "अजन्मानि तथा नित्ये पौर्वापर्यविवर्जिते । तत्त्वे जन्मादिरूपत्वं विरुद्धमुपलभ्यते" इति । तस्मादविद्यादशायामुक्तरीत्या जातिरेव स्फोटः । निष्कर्षे तु ब्रह्मैव स्फोट इति भावः । परन्तु अविद्यादशायामपि वर्णानां वाचकत्वमभ्युपेत्य स्फोटखण्डनमयुक्तमिति ध्येयम् । ब्रह्मैवेत्यनेनात्रायं पुरुषः स्वयं ज्योतिः तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभातीति श्रुतिसिद्धं स्वपरप्रकाशत्वं सूचयन् स्फुटत्यर्थोऽस्मादिति स्फोट इति यौगिकं स्फोटशब्दाभिधेयत्वं सूचयतीति सिद्धम् ॥ ७४ ॥

विद्याधीशवडेरुसंज्ञकमतिश्रीमाध्वभट्टारकं
जित्वा केनलवेङ्कटव्यसविधेप्यान्दोलिकां प्राप्तवान् ॥
यश्चक्रे मुनिवर्यसूत्रविवृतिं सिद्धान्तभङ्गं तथा
माध्वानां तमहं गुरूपमगुरुं रङ्गोजिभट्टं भजे ॥ १ ॥
पाणिनीयवचसां खलु मूलं चन्द्रशेखरभवानिनिरूढम् ॥
तेन भूषणमिदं हि तयैव प्रीतये भवतु साम्बशिवस्य ॥ २ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारीणधूरीणरङ्गोजीभट्टात्मजकोण्डभट्टकृते वैयाकरणभूषणे
चरमः स्फोटः समाप्तः ॥

श्रीगणेशाय नमः ॥

# पदार्थदीपिका प्रारभ्यते।

**श्रीमत्सिद्धिकरं कान्तं रमोमारमणात्मकम् ।**
**दयासिन्धुं चिदानन्दं सितासितमुपास्महे ॥ १॥**

इह खलु चतुर्थपुरुषार्थहेतुभूतमात्मतत्त्वज्ञानमामनन्ति । तच्च पदार्थतत्त्वनिर्णयाधीनमिति पदार्थतत्त्वमत्र विविच्यते ॥ तत्र—

प्रमितिविषयः पदार्थः ॥

स द्विधा भावो ऽभावश्च । भावाः षडेव द्रव्यगुणकर्मसामान्यविशेषसमवायभेदात् । तत्र—

द्रव्यत्वजातिमद्, गुणाश्रयो वा द्रव्यम् ॥

तच्च पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनोभेदान्नवधा । तत्र—

पृथिवीत्वजातिमती गन्धवती वा पृथिवी ॥

मणिमुक्तावज्रादावप्यनुद्भूतगन्धोस्त्येवेति न तत्राव्याप्तिः । तद्भस्मनि गन्धोपलम्भेन तत्रापि गन्धकल्पनात् । मण्यादयः गन्धवन्तः गन्धवद्भूम्यारम्भकावयवारब्धत्वात् महापटवत् । अथ वा गन्धवत्त्वं गन्धसमानाधिकरणजलावृत्तिजातिमत्त्वम् । गन्धसमानाधिकरणद्रव्यत्वादिकमादाय जलादावतिव्याप्तिवारणाय जलाऽवृत्तीति । एतेन नानागन्धवदारब्धपदार्थस्य निर्गन्धत्वपक्षेपि न तत्राव्याप्तिस्तादृशपृथिवीत्वसत्वात् । सा च

पृथिवी द्विधा । नित्या ऽनित्या च । परमाणुरूपा नित्या । कार्यरूपा त्वनित्या । यदिदं जालसूर्यमरीचिस्थं सर्वतः सूक्ष्ममुपलभ्यते । तच्च त्र्यणुकं तस्य षष्ठांशः परमाणुः । तत्रिभिर्द्व्यणुकैरारभ्यते । द्वाभ्यां परमाणुभ्यां च द्व्यणुकमिति स्वीकारात् । कार्यरूपा च त्रिविधा शरीरेन्द्रियविषयभेदात् । शरीरं त्वन्त्यावयवि भोगायतनम् । भोगनियामकमिति यावत् । तत्पञ्चधा शुक्रशोणिताभ्यां विनैवादृष्टविशेषोपगृहीतपृथिवीजन्यं जरायुजमण्डजं स्वेदजमुद्भिदं च । आद्यं वशिष्ठादेः । गर्भावरकश्चर्मविशेषो जरायुस्तज्जं मनुष्यादि । अण्डजं पक्ष्यादि । स्वेदजं यूकालिक्षादि । पृथिवीं भित्वा जायमानमुद्भिदं वृक्षादि । इन्द्रियं घ्राणम् । तच्च गन्धतज्जातितदभावानामेव ग्राहकम् नासाग्रवर्ति तत्पार्थिवमेव, रूपादिषु पञ्चसु गन्धस्यैवाभिव्यञ्जकत्वात् । कुंकुमगन्धाभिव्यञ्जकतैलवत् । सक्तुरसनवशरावगन्धाभिव्यञ्जकजलेतिव्याप्तिवारणाय एवकारः । विषयाः पुष्पादयः ॥

अप्त्वजातिमत्यः शीतस्पर्शवत्यो वा आपः ॥

ता अपि द्विधा नित्या अनित्याश्च । परमाणुरूपा नित्या कार्यरूपा अनित्याः । ता अपि शरीरेन्द्रियविषयभेदात् त्रिधा । शरीरं वरुणलोके । तत्तु पार्थिवावयवमिलनात् करकावत् अदृष्टविशेषाद्वा घनीभूतं दृढं सद्भोगोपयोगि इन्द्रियं रसनम् तच्च रसतज्जातितदभावानामेव ग्राहकम् जिव्हाग्रवर्ति तदाप्यमेव । रूपादिषु पञ्चसु रसस्यैवाभिव्यञ्जकत्वात् लालावत् । जलमाधुर्यव्यञ्जकहरीतक्यामलकादौ व्यभिचारवारणायैवकारः । तयोः कषायाम्लरसवत्तया पटरञ्जकद्रव्यरूपविशेषाभिव्यञ्जकत्वात् । विषया नद्याद्याः ॥

तेजस्त्वजातिमदुष्णस्पर्शवद्वा परप्रकाशरूपवद्वा तेजः ॥

नित्यमनित्यं च । परमाणुरूपं नित्यं कार्यरूपमनित्यम् । तदपि त्रिधा शरीरेन्द्रियविषयभेदात् । शरीरमादित्यलोके । इन्द्रियं चक्षुः रूपतज्जातितद्वद्द्रव्यतद्गतजातिगुणकर्मणां ग्राहकं कृष्णताराग्रवर्त्ति । तत्तैजसमेव, रूपादिषु पञ्चसु रूपस्यैवाभिव्यञ्जकत्वात् आलोकवत् । पूर्ववद्धरीतक्यामलकादौ व्यभिचारवारणायैवकारः ॥

ननु रूपवान् परमाणुश्चक्षुषा कुतो न गृह्यते । चाक्षुषप्रत्यक्षे विषयद्रव्यगतं रूपं महत्त्वं हेतुः परमाणौ तन्नास्तीति चे, त्तर्ह्याकाशात्मादयः कुतो न गृह्यन्ते । विषयगतं रूपं महत्त्वं चेति द्वयमपि हेतुरिति चे,त्तर्हि तप्तवारिस्थं तेज उष्मा वा कुतो न गृह्यते । उच्यते । द्रव्यचाक्षुषप्रत्यक्षे विषयगतमुद्भूतरूपं महत्त्वं च कारणं, परमाणुर्न महानाकाशो न रूपवान् तप्तवारिस्थं तेजश्च नोद्भूतरूपवत् । तद्रूपस्यानुद्भूतत्वात् । एवं चाक्षुषप्रत्यक्षे विषयगत उद्भूतस्पर्शोपि हेतुः । बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षमात्रएव महत्त्वरूपस्पर्शानां लाघवाद्धेतुत्वात् । तथा च प्रदीपादिप्रभाया रूपमात्रं गृह्यते तेन तदाश्रयद्रव्यमनुमीयतइति सिद्धान्तः । प्रभाशब्दोपि तद्रूपवाचक एवेत्याहुः ॥

नन्वेवमपि अन्धकारस्थो घटो ऽपि गृह्येत द्रव्यचाक्षुषे आलोकसंयोगोपि हेतुरिति चेत्, न, चक्षूरूपस्य सुवर्णरूपस्य वा अंधकारेपि संयोगसत्त्वादिति चेन्न । द्रव्यप्रत्यक्षे उद्भूतानाभिभूतरूपालोकसंयोगस्य हेतुत्वात् । चक्षूरूपस्योद्भूतत्वाभावात् सुवर्णरूपस्याभिभूतत्वात्तत्संयोगोपि न प्रत्यक्षम् । विषयश्चतुर्द्धा भौमं दिव्यमौदर्यमाकरजंच । पार्थिवमात्रेन्धनं तेजो भौममग्न्यादि । अबिन्धनं तेजो दिव्यं विद्युदादि । उभयेन्धनमौदर्यं भक्षितान्नस्य

पीतजलस्य च पाचनात् । खानिजमाकरजं सुवर्णादि ॥

ननु सुवर्णं न तेजः परमकाशकरूपविरहात् उष्णस्पर्शाभावाच्चेति चेन्न । अभिभूतरूपस्पर्शयोस्तत्र स्वीकारात् । पीतरूपवन्तः पार्थिवभागास्तत्र मिलताः सन्तीति तदीयरूपस्पर्शाभ्यां तयोरभिभवस्सम्भवत्येव । बलवत्सजातीयग्रहणकृतमग्रहणं ह्यभिभवस्तारशब्दान्मन्दस्येव ॥

मीमांसकास्तु पीतरूपवत् द्रव्यान्तरमेव सुवर्णमूचिरे । तन्न । द्रव्यान्तरकल्पने गौरवात् ॥

अन्ये तु हरिद्रादिवत्पीतरूपवत्त्वात्पृथिव्येव सुवर्णमित्याहुः । तन्न । अत्यन्तानलसंयोगाद्भस्मापत्तेः ॥

वायुत्ववानरूपस्पर्शवान्वा वायुः ॥

सोपि द्विधा नित्यो ऽनित्यश्च । परमाणुरूपो नित्यः कार्यरूपो ऽनित्यः । सोपि शरीरेन्द्रियविषयप्राणभेदात् चतुर्धा । शरीरं वायुलोके पिशाचादीनां च । इन्द्रियं त्वक् सकलशरीरव्यापकम् । मिद्धानाड्यां तत्सत्त्वेपि तन्मनोयोगस्य स्वप्नजनकत्वात् तदा स्वाप्नज्ञानमेव न त्वाचादि पुरीतत्येवं परं नास्ति अतस्तस्यां मनःप्रवेशे ज्ञानशून्या सुषुप्तिर्भवति, ज्ञानमात्रे त्वङ्मनोयोगस्य हेतुत्वेन तदानीं तदभावाज्ज्ञानाभावोपपत्तेः । तत्तु वायवीयमेव रूपादिषु पञ्चसु स्पर्शस्यैवाभिव्यञ्जकत्वात् अङ्गसङ्गिसलिलशैत्याभिव्यञ्जकव्यजनपवनवत् । एलादौ जलस्पर्शाभिव्यञ्जके व्यभिचारवारणायैवकारः । तच्चोद्भूतस्पर्शतज्जातितदभावोद्भूतरूपस्पर्शवद्द्रव्यतद्गतगुणतज्जातितदभावानां ग्राहकम् । अत उद्भूतरूपाभावात्तप्तवारिस्थं तेजो, रूपाभावाद्वायुश्च त्वचा न गृह्यते, किं तु तत्स्पर्शमात्रं गृह्यते तदाश्रयत्वेन वायुरनुमीयते इति सिद्धान्तः । एवं प्रदीपवज्रचन्द्रा-

दिप्रभापि न त्वचा गृह्यते उद्भूतस्पर्शाभावात् ॥

मीमांसकस्तु उद्भूतस्पर्शवद् द्रव्यं त्वचो योग्यं लाघवात् न तु रूपमपि तत्र प्रवेश्यं गौरवात् । अतो वायुरपि स्पार्शनप्रत्यक्ष एव । अत एव वायुं स्पृशामीत्यनुभवः । अन्यथा घटादेः स्पर्शो गृह्यते तेन तद् द्रव्यमनुमीयते इति वक्तुं शक्यत्वात् किमपि द्रव्यं स्पार्शनप्रत्यक्षं न स्यात् । किं च चक्षुषा रूपं गृह्यते घटादि तदाश्रयत्वेनानुमीयतइत्यपि स्यात् । तथा च द्रव्यमतीन्द्रियमेव स्यात् । एवं महदुद्भूतरूपवद्द्रव्यं चक्षुर्योग्यम् । अतः प्रदीपचन्द्रादिप्रभापि चक्षुर्ग्राह्यैवेत्याहुः । विषयस्तु वृक्षादिकम्पजनकः । प्राणः पञ्चधा प्राणापानव्यानोदानसमानभेदात् ॥

शब्दाश्रय आकाशः ॥

स च तत्कार्यस्य शब्दस्य सर्वत्रोपलम्भात् विभुः, लाघवादेको नित्यश्च श्रोत्रं तदीयमिन्द्रियम् । अदृष्टविशेषोपगृहीतकर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम् । बधिरस्यादृष्टविशेषाभावान्न श्रोत्रमस्ति ॥

कालिकपरत्वापरत्वानुमेयः कालः ॥

स चैकोपि वर्त्तमानातीतभविष्यत्क्रियोपाधिवशाद्वर्तमानादिसंज्ञां लभते । पाकपठनादिक्रियावशात् पाचकपाठकादिव्यपदेशवत् ॥

दिगेका नित्या दैशिकपरत्वापरत्वासाधारणकारणम् ॥

सा चेन्द्रयमाग्निनिर्ऋतिवरुणवायुकुबेरेशानब्रह्मानन्तरूपोपाधिवशात् पूर्वादिभेदेन दश संज्ञा लभते । एतौ दिक्कालौ जगदाधारौ जगद्धेतू च । इहेदानीं करोमीति सर्वानुभवात् ॥

आत्मत्वसामान्यवान् ज्ञानाश्रयो वा आत्मा विभुर्नित्य-

श्चेति ॥

स द्विधा जीवेश्वरभेदात् । सुखाद्याश्रयोऽहम्प्रत्ययवेद्यो जीवः ॥

नन्वहं गौरोऽहं जानामीतिसामानाधिकरण्योपलम्भाद्गौरत्वादिरूपवति ज्ञानसुखाद्याश्रयता सिध्यतीति देह एव आत्मा स्यात् । न च शरीरं नात्मा ज्ञानशून्यत्वात् । तदपि शरीरं ज्ञानशून्यं पार्थिवत्वात् घटवदित्यनुमानात् सिध्यतीति वाच्यम् । घटस्य केवलपार्थिवत्वाज्ज्ञानशून्यत्वेपि भूतसमुदायात्मकत्वात् शरीरस्य ज्ञानवत्त्वसम्भवात् । केवलचूर्णादौ रागाभावेपि चूर्णपर्णादिसमुदाये ताम्बूले रागोत्पत्तिवत् । अहं ज्ञानवानिति प्रत्यक्षबाधेनानुमानस्य शरीरे ज्ञानाभावाऽसाधकत्वाच्च वन्हिरनुष्णः कृतकत्वात् घटवदित्यनुमानवत् । स्वीचक्रुश्च देह एवात्मेति चार्वाकाः । एवं काणोहं बधिरोहमिति इन्द्रियधर्मसामानाधिकरण्यादिन्द्रियाण्येवात्मेत्यपरे वदन्ति, तत्कथं नित्यो विभुरात्मेति सङ्गच्छेत इति चेन्न । शरीरेन्द्रियाणामनित्यत्वेनात्मत्वासम्भवात् । न चात्माप्यानित्य एवास्तु, कृतहानाकृताभ्यागमप्रसङ्गात् । धर्माधर्मशास्त्रवैयर्थ्यापत्तेः । किं च कश्चिदुत्पत्तिमारभ्यैव रूपभाग्यादिमान् नान्य इति नियमायाऽदृष्टविशेषो हेतुर्वाच्यः स चैतज्जन्मनि न सम्पादित इति तत्सम्पादकजन्मान्तरयोग्यात्मसिद्धिः । अनेकजन्मयोगिनश्च नित्यतैव नाशकाभावात् । न च स्वतन्त्र ईश्वर एव स्वेच्छावशात् स्वसृष्टप्राणिष्वेवं करोति कुलाल इव स्वनिर्मितघटेषु क्व चित् दुग्धयोगं क्व चित् मूत्रपुरीषयोगमिति वाच्यम् । अचेतनइव चेतने तथा व्यवहारे वैषम्यनैर्घृण्यप्रसङ्गात् । दृश्यते च कुलालादेरेव घटादिवत्पुत्रेषु निर्निमित्तकतया व्यवहारे वैषम्यादिप्रयुक्ता नि-

न्देति । न चायं नित्यः परमाणुरूप एवास्तु, सकलशरीरव्यापिसुखदुःखाननुभवप्रसङ्गात् । परमाणुरूपवज्ज्ञानादेस्तद्धर्मस्याप्रत्यक्षत्वापत्तेश्च । स च प्रतिशरीरं भिन्नः सुखदुःखाद्ययौगपद्याद्वैचित्र्याच्च । अन्यथा परकीयसुखदुःखानुसन्धानप्रसङ्गाच्च हस्तपादादिभेदस्येव शरीरभेदस्याप्रयोजकतयाननुसन्धानाऽप्रयोजकत्वात् जातिस्मराणां जन्मान्तरीयार्थस्मरणानापत्तेश्चेति दिक् । दुःखासमानाधिकरणज्ञानवान्नित्यज्ञानाश्रयो वा ईश्वरः । स च सकलकार्यकर्तृत्वेन सिद्ध्यतीति वक्ष्यते ॥

आत्मतद्गुणादिप्रत्यक्षकरणं मनः ॥

तच्च परमाणुपरिमाणं प्रतिपुरुषं भिन्नं यत्रयत्रेन्द्रिये संयुज्यते ततस्ततो ज्ञानमुत्पद्यते । अतो युगपदनेकेन्द्रियैर्ज्ञानाभावोपपत्तिः । अन्यथा युगपद्रूपशब्दादिग्रहणापत्तौ व्यासङ्गान्न ज्ञातमित्यनुभवानापत्तेः । तथा च गौतमसूत्रं "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्ग" मिति । अत एव मनो विभुः निःस्पर्शद्रव्यत्वात् आकाशवदिति मीमांसकोक्तमपास्तम् । अवधानिनां तु अभ्यासविशेषात्प्रेरणया झटिति मनसि क्रियया तत्तदिन्द्रियैर्योगाज्ज्ञानक्रमिकत्वेऽपि यौगपद्याभिमानमात्रम् ॥

नन्वन्धकारोऽपि निःस्पर्शवत्त्वात् क्रियावत्त्वादिलक्षणरूपवत्त्वाच्च पृथिव्यादिभ्यो भिन्नं दशमं द्रव्यमस्तीति कथं नवैव द्रव्याणि इति चेत् । मैवम् । तस्य रूपवद्द्रव्यत्वे चक्षुषा ग्रहणं न स्यात् । द्रव्यचाक्षुषमात्रे उद्भूतानभिभूतरूपवदालोकसंयोगस्य हेतुत्वात् । न च चक्षुर्गोलकवृत्तितामसेन्द्रियान्तरादन्धकारग्रहः । इन्द्रियान्तरकल्पने गौरवात् । किं चान्धकारसमनियत आलोकाभावो ऽवश्यमभ्युपेयः । तथा च तेनैवारोपितनीलरूपेणान्धकार इति व्यवहारसम्भवान्न द्रव्यान्तरं तमः । अति-

गौरवात् । तस्मादुद्भूतानभिभूतरूपवदालोकाभावसमूहस्तमः ॥

गुणत्वजातिमन्तो गुणाः ॥

ते च रूपरसगन्धस्पर्शसङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मसंस्कारशब्दाश्चतुर्विंशतिरेव ॥

तत्र रूपत्वजातिमद्रूपम् ॥

पृथिव्यादित्रयवृत्ति । शुक्लपीतहरितरक्तकृष्णकपिलचित्रभेदात्सप्तधा । तदवान्तरजातयस्तु असङ्ख्याताः । तत्र शुक्लभास्वरं तेजसि । परप्रकाशकतावच्छेदकजातिविशेषो भास्वरत्वं तद्वद् भास्वरम् । शुक्लमेवाभास्वरमपाकजमप्सु षड्विधमचित्रम् । पाकजं पृथिवीपरमाणौ सप्तविधमपि अपाकजमेव पृथिवीद्व्यणुकादौ । तत्रावयविरूपं कारणम् । एवं रसादावपि । मीमांसकास्त्वेकैका एव नीलपीतारुणादिव्यक्तयो नित्याश्च । ताश्चोत्पद्यमानघटादौ घटत्वादिवत्संसृज्यन्ते इति रूपवान् घट इत्यादिप्रतीतिः । घटादिनाशे च व्यक्त्यन्तरे घटत्वादिवदेव वर्त्तन्त इत्याहुः । तन्न । एवं हि घटत्वादिवज्जातित्वापत्तेः । नित्यमेकमनेकसमवेतं सामान्यमिति तल्लक्षणयोगात् । इष्टापत्तौ नीलनीलतरादिव्यवहारानापत्तेः । नहि भवति गोत्वतरो गोत्वतम इति । किं नीलद्रव्यस्य पाकेन रक्तताया दर्शनस्थले पूर्वनाशस्याऽकामेनाप्यभ्युपेयत्वान्न किंचिदेतत् ॥

रसत्वजातिमान् रसः ॥

पृथिवीजलवृत्तिः । मधुराम्लकटुतिक्तकषायलवणभेदात् षोढा । मधुरोऽपाकजोऽप्सु षड्विधोपि । पाकजः पृथिवीपरमाणौ द्व्यणुकादावपाकजः ॥

गन्धत्वजातिमान् गन्धः ॥

पृथिवीमात्रवृत्तिः । जलादौ तूपष्टम्भकभागगत एव लोहितस्फटिक इतिवत् प्रतीयते । अत एव पुष्पाद्युपरिसमागतवायुना पुष्पाद्यवयवा एव नीयन्ते इति सिद्धान्तः ॥

नन्वेवं पुष्पादेः सच्छिद्रता, कस्तूर्यादेः परिमाणन्यूनता च स्यादिति चेन्न । भोजकाऽदृष्टवशात् पुनर्भागानां पूरणाभ्युपगमात् । क्व चित्कर्पूरादौ तथात्वस्येष्टत्वात् । सुरभिरसुरभिश्चेति द्विधा, सोपि पाकजः परमाणौ द्व्यणुकादावपाकजः ॥

स्पर्शत्वजातिमान् स्पर्शः ॥

पृथिव्यादिचतुष्टयवृत्तिः शीतोष्णानुष्णाशीतभेदात्त्रिधा । शीतो ऽप्सु । उष्णस्तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः । वायावपाकज एव पृथिवीपरमाणौ पाकजः पृथिवीद्व्यणुकादावपाकजः । कोमलकठिनचित्रभेदात् अनेकधा ॥

ननु कथं रूपस्पर्शावेव चित्रावुदाहृतौ रसगन्धयोरपि हरीतक्यादौ विचित्रयोर्दर्शनात् । न च तत्र नानारससमुदाय एव भासते षड्रसा हरीतकीति व्यवहारादिति वाच्यम् । रूपस्पर्शयोरप्येवमापत्तेः । चित्ररूपवति अत्र श्याममत्र रक्तमित्याद्यनुभवाद्व्यवहाराच्चेति चेत् । उच्यते । न तावन्नीलपितारब्धे नीलं सम्भवति, समवायेन नीलं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन नीलेतरस्य प्रतिबन्धकत्वात् । अन्यथा पीतावच्छेदेनापि नीलापत्तेः । नापि परस्परप्रतिबन्धादुभयोरसम्भवेन नीरूपत्वमेवास्त्विति वाच्यम् । अतीन्द्रियतापत्तेः । विषयगतोद्भूतरूपस्य प्रत्यक्षहेतुतायाः प्रागभिहितत्वात् । तस्मान्नीलपीतादिविलक्षणमेव चित्रं तत्र जन्यतइति वक्तुं शक्यत्वात् । एवं स्पर्शेप्यवधेयम् । गन्धरसयोस्त्वस्वीकारेपि न क्षतिः । तयोः प्रत्यक्षाहेतुत्वात् । केचित्तु चित्ररसगन्धावपीच्छन्ति । तन्तु वर्द्धमानादिष्व-

नादृतम् ॥

ननु रूपादयः पृथिवीपरमाणावेव पाकजा इति कथं सङ्गच्छताम्। आमपाकनिक्षिप्तघटादावपि पूर्वरूपनाशपरोत्पत्त्योरनुभवसिद्धत्वादिति चे,त्सत्यम्। घटमध्येपि पाकजरूपाद्यनुभवसिद्धं तच्च तत्राग्निसंयोगं ज्ञापयति अग्निसंयोगस्यैव पाकजनकत्वात्। तथा च वन्ह्यभिघातात् तत्र परमाणुपर्यन्तं घटावयवतदवयवानां विभागः। ततः परस्परसंयोगनाशः। ततो विशकलितेषु तन्तुषु पटनाशवदसमवायिकारणनाशात् द्रव्यनाशे स्वतन्त्राः परमाणवः पच्यन्ते तत्र कदाचित्समानाग्निसंयोगादेकजातीयं, विलक्षणाच्च परस्परविलक्षणं रूपमुत्पद्यते, पुनर्भोजकादृष्टसहकृत ईश्वर एव सृष्ट्यादाविव द्व्यणुकादिक्रमेण पूर्ववदेव तादृशरेखोपरेखासंस्थानवत् करोति। तथा च परमाणुरूपाद् द्व्यणुके ततः त्र्यणुके इति क्रमेण पूर्वकुलालनिर्मितघटइव तत्रापि रूपाद्युत्पत्तिरिति भवति परमाणावेव पाकजरूपरसगन्धस्पर्शाः न द्व्यणुकादाविति। घटादावेव पाकाभ्युपगमे कठिनघटादिमध्यभागे वन्ह्यप्रवेशान्मध्येपि पूर्वरूपादिनाशनवीनोत्पत्ती न स्यातामिति काणादाः ॥

नैयायिकास्तु घटादयः सच्छिद्राण्येव द्रव्याणि, कथमन्यथा भाण्डान्तर्गतौदनादिपाकः कथं वा तन्मध्यवर्त्तिजलस्यन्दनप्रस्रवणे। तथा च तद्द्वारा प्रविष्टवन्हिना मध्येपि पाकसम्भवाद्गौरवग्रस्तनिष्प्रमाणकपूर्वनाशनवीनोत्पत्तिकल्पनां तदुत्पादनायेश्वरे भारं च न सहन्ते। तथा च तन्मते घटादावपि पाकः सिध्यति ॥

ननु संयोगस्योभयनिष्ठत्वाद् घटादाविव वन्ह्यादावपि रूपादयः कुतो न भवन्तीति चेत, सत्यम्। समवायेन पाकजरूपं

प्रति पृथिवीत्वेन हेतुत्वात् वन्हेस्तेजस्त्वात् । इदमेव च पृथिवी-त्वजातौ प्रमाणम् ॥

ननु मतद्वयेऽप्यग्निसंयोगादेकस्माद्विलक्षणा भिन्नाश्च रूपादयः कथं प्रागभावभेदादिति चेन्न । तस्य वैलक्षण्याप्रयोजकत्वात् । अन्यथा घटादीनामपि पटादिवत्परस्परवैलक्षण्यापात्तिरिति चेन्न । रूपवति घटे रूपान्तरानुत्पत्तेः रूपं प्रति रूपं प्रतिबन्धकमिति सर्वसिद्धम् । एवं रसादावपि । तथा च प्रतिबन्धकाभावरूपतत्तद्भावकारणभेदवैलक्षण्याभ्यां भेदवैलक्षण्ये द्वित्वत्रित्वादिजद्व्यणुकत्र्यणुकाणुत्वह्रस्वत्वदीर्घत्वमहत्त्वेष्वप्येव भेदादि । केचित्तु अग्निसंयोगभेदादेव भेदमाहुस्तेषामणुत्वादौ गतिश्चिन्त्या ॥

ननु स्पर्शस्य पाकजत्वे किं मानम् । नहि रूपरसादिवत्पाकोत्तरं स्पर्शान्तरमनुभूयते । न च चांडालस्पर्शनिषेधगोब्राह्मणस्पर्शविध्यनुपपत्त्या तत्सिद्धिरित्याचार्यैरुक्तं युक्तम् । तत्र स्पर्शपदस्य संयोगपरत्वात् । अन्यथा गङ्गास्पर्शविधिकर्मनाशाजलस्पर्शनिषेधानुरोधाज्जलेऽपि दीपाग्निस्पर्शनिषेधपरमेश्वरार्त्तिक्यदीपस्पर्शविधेरनुरोधात्तेजसि तत्सिद्ध्यापत्तेरिति चेन्न । पूर्वं काठिनस्य पाकेन कोमलतायाः पूर्वं कोमलस्य पाकेन काठिन्यस्य वानुभवसिद्धत्वेन रुपादिवत्पाकजत्वासिद्धेः । न च काठिन्यकोमलत्वे संयोगविशेषौ । चाक्षुषत्वापत्तेः । एते रूपरसगन्धस्पर्शा उद्भूतानुद्भूता द्विधा । उद्भूतत्वं जातिस्तदभावोऽनुद्भूतत्वमिति प्राञ्चः । अनुद्भूतत्वं जातिस्तदभाव उद्भूतत्वमिति मणिकाराः ॥

संख्यात्वजातिमती संख्या ॥

एकत्वद्वित्वबहुत्वभेदात्त्रिधा । सकलद्रव्यवृत्तिः । तत्रावयव-

गतैकत्वेनावयविन्येकत्वं जन्यते द्वित्वादौ तु विशेषः । घटद्वये चक्षुरादिसंयोगे सति तत्रायमेको ऽयमेक इत्यपेक्षाबुध्या द्वित्वोत्पत्तिरनन्तरं द्वित्वद्वित्वत्वानिर्विकल्पकं ततः सविकल्पकमनन्तरमिमौ द्वाविति प्रतीतिर्भवति । तत्र घटद्वयवृत्त्येकत्वद्वयमसमवायिकारणम् । अपेक्षाबुद्धिर्निमित्तकारणम् । द्वौ घटौ समवायिकारणम् । एवं बहुत्वेपि । अपेक्षाबुद्धिनाशात् द्वित्वादिनाशः । अत एव अपेक्षाबुद्धिः क्षणचतुष्टयस्थायिनी । अन्यथा द्वित्वविशिष्टद्रव्यप्रत्यक्षायोगात् । तद्भिन्नज्ञानेच्छाप्रयत्नादयस्तु द्विक्षणस्थायिन एवेति सिद्धान्तः । द्व्यणुकत्र्यणुकादिगतद्वित्वत्रित्वादेर्भगवदपेक्षाबुध्योत्पन्नस्य च निमित्तकारणादृष्टनाशान्नाशः। नन्वयमेकोयमेक इत्यादिद्वयत्रयादिविषयापेक्षाबुध्या द्वयोर्द्वित्वं त्रिषु त्रित्वमित्यादिनियमः कुतः, वैपरीत्यस्य दुर्वारत्वात् । समवायिकारणादिसाम्ये कार्यवैलक्षण्यं वा कथम् । न चैकत्वद्वयं द्वित्वे त्रयं त्रित्वे हेतुरिति वाच्यम् । एकत्वे द्वित्वाद्यभावात् द्वित्वोत्पत्तेः प्राग् द्रव्येपि तदभावात् द्वित्वे द्रव्यद्वयं हेतुरित्यस्याप्यसम्भवात् । न च प्रागभावादेतदुत्पत्तिरित्याचार्योक्तं युक्तम् । तस्य वैलक्षण्याप्रयोजकत्वात् । अन्यथा कार्यवैलक्षण्यात्कारणवैजात्यकल्पनोच्छेदापत्तिरिति चेत् । उच्यते । केवलापेक्षाबुध्या द्वित्वं द्वित्वसहितया त्रित्वं तत्सहितया चतुष्टमित्यभ्युपगमात् । द्वित्वं द्वयोरेव कुत इति चेत् । तत्रैव तत्प्रागभावसत्वादिति गृहाण ॥

परिमाणत्ववत् परिमाणम् ॥

सकलद्रव्यवृत्ति । तच्चतुर्विधम् । अणुमहद्दीर्घह्रस्वभेदात् । तत्रोत्कृष्टाणुत्वह्रस्वत्वे परमाणुमनसोर्नित्ये । अपकृष्टे द्व्यणुके । एवं महत्वदीर्घत्वे उत्कृष्टे नित्ये आकाशादौ विभुत्वशब्दवाच्ये । अपकृष्टे जन्ये तरतमभावेन त्र्यणुकादौ स्तः । बिल्वादामलकम-

णिवति व्यवहारस्तु अपकृष्टमहत्वाद्गौणः । एवं प्रांशोर्वामनो ह्रस्व इत्यपि अपकृष्टदीर्घत्वाद्गौणः । तत्र द्व्यणुकपरिमाणं परमाणुद्वित्वसंख्यायोनिः । द्व्यणुकगतबहुत्वात् त्र्यणुके महत्वम् । घटादौ च कपालमहत्वम् । क्वचित् क्वाचिद्बहुत्वसंख्या विलक्षणमहत्वे हेतुः । तूलपिण्डपरिमाणविशेषे अवयवप्रचयः कारणम् । स च प्रशिथिलः संयोगः ॥

घटः पटात्पृथगित्यनुभवसिद्धपृथक्त्वजातिमत्पृथक्त्वम् ॥

तदपि संख्यावदेव सर्वद्रव्यवृत्ति एकपृथक्त्वद्विपृथक्त्वत्रिपृथक्त्वादिभेदेन अनेकधा । अवयवगतैकपृथक्त्वादवयविन्येकपृथक्त्वमुत्पद्यते । रूपं रसात्पृथक् इति तु भिन्नत्वाद्गौणः प्रयोगः । ननु भेदेनैव घटः पटात्पृथगिति व्यवहारोपपत्तौ पृथक्त्वाख्यगुणे किं मानमिति चेत् । अत्राचार्याः । अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते इति व्याकरणसूत्रेण पृथक्त्ववाचकपदयोगे विधीयमानपञ्चम्यनुरोधेन तत्स्वीकारः । महाभाष्ये ऽन्येत्यर्थग्रहणमभ्युपेत्य तदर्थवाचकतरादिपदयोगेपि पञ्चमीसिद्धेस्तस्य सूत्रे प्रत्याख्यातत्वात् । भेदस्य अन्यपदार्थत्वेन विवक्षणे च तद्वाचकपदयोगाविशेषात् घटादन्यो विलक्षण इत्यादाविव घटो नेत्यत्रापि पञ्चम्यापत्तेः ॥

संयुक्तावित्यनुभवसिद्धसंयोगत्वजातिमान्संयोगः ॥

सर्वद्रव्यवृत्तिः । सत्रिविधः । अन्यतरकर्मज उभयकर्मजः संयोगजश्च । निष्क्रियस्य स्थाणोः क्रियावता पक्षिणा सहाद्यः । मल्लयोर्मेषयोर्वा द्वितीयः । अङ्गुलीतरुसंयोगात्कायतरुसंयोगोन्त्यः । सोयं संयोगो द्विनिष्ठः घटपटौ संयुक्तौ इतिप्रत्ययात् । घटे पटस्य पटे घटस्यान्य एव संयोगः । अन्यथा घटः पटसंयुक्तइतिवत् घटो घटसंयुक्त इत्यपि प्रतीत्यापत्तेः । तथा

चैकद्रव्यवर्त्येव संयोग इति मीमांसकाः ॥

घटपटौ विभक्ताविति प्रतीतिसिद्धविभागत्वजातिमान् विभागः ॥

सर्वद्रव्यवृत्तिः संयोगजः । हिमवद्विन्ध्यौ । विभक्ताविति प्रयोगस्तु संयोगाभावयोगात् गौणः । शेषं पूर्ववत् ॥

परत्वत्वजातिमत् परत्वम् ॥

तत् द्विविधं कालिकं दैशिकं चेति । आद्यं जन्यद्रव्ये एव । द्वितीयं मूर्ते एव । इयत्तावच्छिन्नपरिमाणं मूर्तत्वमुच्यते तदाश्रयो मूर्तम् । तथाहि । युवस्थविरपिण्डयोरयमस्माद्बहुतरतपनपरिस्पन्दाश्रयो ऽयमस्मादल्पतरतपनपरिस्पन्दाश्रय इति बुद्ध्या परत्वापरत्वे जन्येते । तदीयैव अयमस्मात्पर इति अयमस्मादपर इति धीरुत्पद्यते । एतदेव ज्येष्ठत्वं कनिष्ठत्वं च । तत्र तपनक्रियायाः पुरुषे सम्बन्धघटको महाकालोऽभ्युपेयते । एवं व्यवहितसन्निकृष्टयोः पिण्डयोरयमस्मात्स्वल्पतरसंयुक्तसंयोगवान् अयमस्माद्बहुतरसंयुक्तसंयोगवानिति ज्ञानात् दैशिकपरत्वापरत्वे जन्येते तयोरेवायमपरोयं पर इति धीरुत्पद्यते । तत्र तावत् देशसंयोगसङ्क्रामिका महादिगभ्युपेयते ॥

गुरुत्वत्वजातिमद्गुरुत्वम् । आद्यपतनासाधारणकारणम् ॥

पृथिवीजलवृत्ति । अतीन्द्रियं पतनानुमेयमित्युदयनाचार्याः। अधोदेशावच्छेदेन प्रत्यक्षमेव तदिति लीलावतीकारः ॥

द्रवत्वत्वजातिमत् द्रवत्वम् ॥

पृथिव्यादित्रयवृत्ति । द्विविधं सांसिद्धकं नैमित्तकं च। तत्र स्वाभाविकं जले करकादौ चादृष्टवशात् घनीभावात्प्रतिबन्धकमात्रं वस्तुतोऽस्त्येव क्षणोत्तरमुपलम्भात् । लाक्षासुवर्णादावग्निसंयोगनिमित्ताज्जायमानमन्त्यम् ॥

स्नेहः सङ्ग्रहरूपकार्यानुमेयो गुणः ॥

जलमात्रवृत्तिः । घृततैलादावुपष्टम्भकजलभागतः ॥

बुद्धित्वजातिमती बुद्धिः ॥

सा द्विधा स्मृतिरनुभवश्च ॥

स्मरामीत्यनुभवसिद्धस्मृतित्वजातिमती स्मृतिः ॥

सा च पूर्वानुभवजन्यसंस्कारजा इति वक्ष्यते ॥

अनुभवामीत्यनुभवसिद्धजातिविशेषोनुभवत्वमित्येके ॥ अनुमित्यादौ अनुभवामीत्यप्रतीतेः प्रत्यक्ष एव । तथानुभवाच्चानुभवसिद्धमनुभवत्वं प्रत्यक्षत्वमेवेत्यपरे । प्रकृते तु स्मृतिभिन्नज्ञानत्वमेवानुभवत्वमिति ॥ सेयं बुद्धिर्द्विधा मिथ्या प्रमा च ॥

असद्विषयणी मिथ्या ॥

शुक्ताविदं रजतमिति बुद्धौ शुक्तिरजतत्वयोः प्रसिद्धयोरलीकस्यैव समवायस्य विषयीकरणादिति वाचस्पतिमिश्राः । आचार्यादयस्तु । असतो भानासम्भवाच्छुक्तौ प्रसिद्धरजतत्वस्यैव तत्समवायस्याप्यारोप एव । अलीकं न भासतइत्यादिवाक्येष्वपि सचेतसां मूकतैवोचितेत्याहुः । तन्मते विशेष्याऽसम्बद्धविशेषणविषयकत्वं मिथ्यात्वम् ॥ घटे रूपमित्यस्य वारणाय विशेष्यावृत्तीति नोक्तम् । असम्बद्धत्वं तु तत्र नास्तीति नातिव्याप्तिः । सा त्रिधा संशयविपर्ययतर्कभेदात् । एकस्मिन्धर्मिणि विरुद्धनानार्थावमर्शः संशयः । यथा स्थाणौ स्थाणुर्वा पुरुषो वायमिति । अत्र पुरुषत्वं तत्सम्बन्धश्च तत्र नास्तीति भवत्यसद्विषयत्वम् । स चायं त्रिधा साधारणधर्मदर्शनजो ऽसाधारणधर्मदर्शनजो विप्रतिपत्तिजश्च । स्थाणुपुरुषसाधारणोच्चत्वदर्शनज आद्य उक्तः । नित्या ऽनित्येभ्यो व्यावृत्तशब्द-

